सर्ग१॥

श्लोक॥ गमागमस्थं गमनादिशून्यं चिद्रूपदीपं तिमिरांधहारं॥
(अजपासंकल्पे)
पश्यामिते सर्वजनांतरस्थं नमामि हंसं परमात्मरूपं इति॥ आनं
मानंदकरं प्रसन्नं ज्ञानस्वरूपं निजबोधरूपं॥ योगींद्रमीड्यं भव
(गुरुगीतायां)
रोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि॥१॥ एको देवः सर्वभूतेषु गूढः
सर्वव्यापि सर्वभूतांतरात्मा॥ कर्माध्यक्षः सर्वभूताधिवासः साक्षी
(इतिश्रुतिः)
चेता केवलो निर्गुणश्च॥१॥ —नमोजीवेशभेदभिन्ना— एकमेवाद्वि
तीयं ब्रम्हेतिश्रुतिः॥ श्लोक॥ दृष्टांतो नैवलभ्यस्त्रिभुवनजठरे
सद्गुरोर्ज्ञानदातुः स्पर्शश्चेत्तत्रकल्प्यः सनयतियदहो स्वर्णता
मश्मसारं॥ नस्पर्शत्वं तथापि स्थितचरणयुगे सद्गुरुः स्वीयशि
ष्ये स्वीयं साम्यं विधत्ते भवति निरूपमस्तेन सौलौकिकेपि॥ इति
भाष्यकारः॥१॥ जयजयजी सर्वगता— नव्यापित्वा देशतां तो
नित्यत्वान्नापिकालतः॥ नवस्तुतोपि सार्वात्म्यादानंत्यं ब्रम्हणित्रि
(पंचदश्यां)
धा॥ पुनरपि॥ अत्यंताभावप्रतियोगित्वं देशपरिच्छेदः॥

प्रागभाव प्रध्वंस प्रति योगित्वं कालपरिच्छेदः॥ अन्योन्याभावप्र
तियोगित्वं वस्तुपरिच्छेदः॥ – जयजय सम विहीना – श्लोक॥
वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः॥ वृक्षांतरात्सजाती
यो विजातीयः शिलादितः॥१॥ तथा सद्वस्तुनो भेदत्रयं प्राप्तं नि
(पंचदश्यां)
वार्यते॥ ऐक्यावधारणाद्वैत प्रतिषेधैस्त्रिभिः क्रमात्॥२॥ एकमे०
जय जय गुरु अखंडा – श्रु०॥ सर्वं खल्विदं ब्रम्ह नेह नानास्ति किं
चनेति॥ अणोरणीयान्महतोमहीयान्॥ अंभस्य पारे भुवनस्य
(नारायणोपनिषत् श्रुतिः)
मध्ये नाकस्य पृष्ठे महतो महीयान्॥ – जयगुरु मंगलमूर्ति॥ – श्रु०
(नारायणोपनिषद्)
त्वमिंद्रस्त्वं रुद्रस्त्वं विष्णुस्त्वं प्रजापतिरिति॥ – गुरुब्रम्हागु० १॥
पुराणें शीशास्त्रांचेवाद – वेदवाक्यैरलभ्योऽहं न शास्त्रैर्नापि चेत
(शिवगीतायां) (इति श्रुतिः)
सा इति॥ येथे वेदश्रुतीचें एक – य एष आदेशो नेति नेति॥ श्लोक॥
नेति प्रमाणेन निराकृताखिलो हृदा समास्वादित चिद्घनामृतः
॥ त्यजेदशेषं जडमात्मगोचरं पीलाय थांभः प्रजा इति तत्फल





श्रीगुरु०॥ निरालंबं समाश्रित्य० इति मूलश्रुतिः॥ प्राकृत मूलपद्य –
आतां साधनचतुष्टय॥ – शांतो दांतो परतस्तितिक्षुः समाहितो भू
(श्रुतिः श्रद्धा०)
त्वा इति॥ आदौ स्ववर्णा० १ इति॥ रामगीता॥ जन्म कष्टं न्तृणामेत का
मः कष्टतरस्ततः॥ क्रोधः कष्टतमस्तस्मात्स एतेषु समाश्रितः॥१॥
अश्ववाहं यथा दुष्टो वाजी गर्ते निपातयेत्॥ एवं क्रोधोपि नरकेन
रं मास्तु निपातयेत्॥१॥ सुखार्थिनि ततः पुंसो नास्ति क्रोध समो रि
(आत्मपुराणे)
पुः॥ ततः कोपो नियंतव्यः कामादप्यति कष्टदः॥२॥ कामबलें स्व
र्गादि जोडे॥ – क्षुत्तृट् त्रिकाल गुणमारुतजैह्व शौस्न्यानस्मान
पारजलधिं न तितीर्य केचित्॥ क्रोधस्य यांति विफलस्य वशंप
(भाग० ७ स्कंधे)
दे गोर्मज्जंति दुश्चरतपा निवृथोत्सृजंति॥१॥ इति कामोक्तिः॥
सारतें ब्रम्हाल स्वरूप०॥१॥ श्लो०॥ अस्ति भाति प्रियं रूपं ना
(वाक्यसुधायां)
मचेत्यंशपंचकं॥ आद्यत्रयं ब्रम्हरूपं मायारूपं ततो द्वयं॥१॥ यद
न्यदन्यत्र विभाव्यते भ्रमादध्यासमित्याहुरमुं विपश्चितः॥

॥ श्रीमद्गुरुध्याऽमायायासरा ॥२॥

अतःकरण पंचकाशी॥१२॥ तदुक्तं रामगीतायां- यावन्न पश्येयदखि
लं मदात्मकं तावन्मदाराधनतत्परोभवेत्॥ श्रद्धालुरत्यूर्जितभ
क्तिलक्षणोयस्तस्य दृश्येऽहमहर्निशं हृदि॥१॥ तथाच शंकरानं
(आत्मपुराणे)
दैः॥ उपासनानां हेतुःस्याद ध्यासोत्रविपर्ययः॥ आनंदात्मास्वयं
जातिर्नामादिपरिवर्जितः॥१॥ नामरूपक्रियास्थान गुणैर्यस्मा
दुपास्यते॥ क्वचित्स एवकुत्रापि ह्युपास्यास्तद्विभूतयः॥२॥ अ
थवा कर्मकांडोक्तं कुर्वाणः कर्मचाखिलं॥ निजवर्णाश्रमप्रोक्तं
फलाशा परिवर्जितः॥३॥ तथाच भागवते॥- वेदोक्तमेव कु
र्वाणो निःसंगोर्पितमीश्वरे॥ नैष्कर्म्यां लभते सिद्धिं रोचनार्था
फलश्रुतिः॥३॥ शमादिषड्संपत्ति-२३॥ सतां संगतिरेवात्र
साधनं प्रथमंस्मृतं॥ द्वितीयं मत्कथालापस्तृतीयं मद्गुणेरणं॥१॥
व्याख्यातृत्वं मद्वचसांचतुर्थं साधनं भवेत्॥ आचार्योपासनं भ



॥ श्री॥ इति अमृतार्णवस्य द्वितीय सर्गः॥६॥

पंचमं पुण्यशीलत्वं यमादिनियमादिच॥ निष्ठामत्पूजने नित्यं षष्ठं
साधनमीरितं॥३॥ ममंत्रोपासकत्वं सांगं सप्तममुच्यते॥ मद्भ
क्तेष्वधिकापूजा सर्वभूतेषु मन्मतिः॥४॥ बाह्यार्थेषु विरागित्वं श
मादिसहितं तथा॥ अष्टमं नवमं तत्त्वविचारो मम भामिनी॥५॥
(अध्यात्मरामायणे अरण्यकांडे)
इति शबरीरामसंवादः॥ -नकोवाटे मिथ्या बंधन॥२५॥ भवपाश
निबद्धस्य मम मोक्षः कथं भवेत्॥ इत्याकुलंमनोयस्य मुमुक्षुः
(ग्रंथांतरे)
कथ्यते बुधैः॥१॥ परीगुरुरायासर्वज्ञा-३३॥ वातैर्विशोषयच्च
भीषयभीमनादैःसंचूर्णयस्व अथवा करकाभिघातैः॥ त्वद्वारी
बिंदु परिपूरितजीवनस्य नान्यागतिर्भवति वारिदचातकस्य॥१
इति ग्रंथांतरे॥ -ऐसें जैं तळमळे चित्त॥३७॥ अहं प्रपन्नोस्मिप
दांबुजं प्रभो भवापवर्गं तव योगिभावितं॥ यथांजसाऽज्ञानम
पारवारिधिं सुखं तरिष्यामि तथानुशाधि मां॥ इति रामगीता

श्रीगु०॥ ॐ किंब्रम्ह - अखिलो० इति निरा० मूलश्रु०॥ सम श्रुतिश्लो०
तोआम्हां - १-२॥ सहनाववतु० इ० शांतिः॥ - तो म्हणिजे तो परात्पर ॥४
तदुक्तं रामगी०॥ श्रद्धान्वितस्त्वमसीतिवाक्यतो गुरोः प्रसादादपि
शुद्धमानसः॥ विज्ञायचैकात्म्यमथात्मजीवयोः सुखी भवेन्मेरुरि
वाप्रकंपनः॥१॥ पुनरपि श्रुतौच - यदा ह्येवैष एतस्मिन दृश्येऽना
त्म्ये निरुक्ते निलयेने ऽभयं प्रतिष्ठां विंदते अथसोऽभयं गतो भव
ति॥ - प्रतिष्ठां विंदते स्वास्मिन्यदास्यादथसोऽभयः॥ कुरुतेऽस्मि
(पंचदश्यां)
न्नंतरं चेदथतस्य भयं भवेत्॥ इति विद्यारण्यः॥ तदुक्तं अध्या
त्मरामायणे - यस्तु भेदं प्रकुरुते स्वात्मनस्य परस्य च॥ भिन्न
दृष्टेर्भयं मृत्युस्तस्य कुर्यान्न संशयः॥१॥ तथाच श्रीमच्छंकरा
चार्यैः॥ स्वल्पमप्यंतरं कृत्वा जीवात्मपरमात्मनोः॥ यः संतिष्ठति
मूढात्मा भयं तस्यापि भाषितं॥१॥ इति अपरोक्षानुभूत्यां - जी *

* वात्मा परमात्मा च पर्यायो नात्र भेदधीः इति,
मा



अप्राप्तलक्ष्यरूपप्राप्ति०॥७॥ - रसो वै सः रसं ह्येवायं लब्ध्वानं
दी भवति॥ इ० श्रु०॥ सत्यं ज्ञानमनंतं ब्रम्ह यो वेद निहितं गुहायां प
रमेव्योमन् सोऽश्नुते सर्वान्कामान् सः ब्रम्हणा विपश्चितेति॥ तथाच
ब्रम्हविदाप्नोति परं इत्यादि श्रुतिवचनान्यनेकानि॥ - सकल उपा
धिरहित॥२२॥ अनाद्यनिर्वाच्यमपीह कारणं मायाप्रधानं तु परं
शरीरकं॥ उपाधिभेदात्तु यतः पृथक्स्थितं स्वात्मानमात्मन्यव
धारयेत्क्रमात्॥ इ० रामगी०॥ इदं सर्वं पुरा सृष्टेरेकमेवाद्वितीयकं
॥ सदेवासीन्नामरूपे नास्तामित्यारुणेर्वचः॥१॥ सतो नावयवाः शं
क्यास्तदंशस्यानिरूपणात्॥ नामरूपे न तस्यांशौ तयोरद्याप्यनु
(पंचदश्यां)
द्भवात्॥२॥ इ० विद्या०॥ सदेव सोम्येदमग्र आसीत्॥ आत्मा वा इ
दमेक एवाग्र आसीत् नान्यत्किंचन मिषत्॥ नेह नानास्ति किंच
नेति श्रुतिः॥ तथाच रामगी०॥ प्रकाशरूपोऽहमजोऽहमद्वयोऽस *

* कृद्विभातोऽहमतीव निर्मलः॥ विशुद्ध विज्ञानघनो निरामयः संपूर्ण आनंदमयोऽह
मक्रियः॥१॥

सर्ग ३॥

इयमात्मापरानंदः परप्रेमास्पदं यतः॥ मानभूवं हि भूयासमिति

(पंचदश्यां)

प्रेमात्मनीक्षते॥ इ० वि०॥ ऐसे ब्रम्ह सच्चिदानंद। त्रिपदीं एकचि

अभेद॥६४॥ नहि प्रकाश सुखयोः सत्तायाअपि भेदधीः॥ जाय

तधीमतां कापिनामांतर समीरणात्॥ पिता पुत्रः पतिर्भ्रातायथै

दा

कस्मिन्नरे पृथक्॥ शब्दास्तद्वदिमे शब्दाः स्युर्यामयि कीर्ति

ताः॥२॥ एकार्थविषयत्वेपि पदानां पुनरुक्तता॥ व्यावृत्ति भेद

तोनस्य. न्नच भेदोपि कश्चन॥३॥ असज्जडं परिच्छिन्नं निरस्य

तिपदत्रयं॥ ततोन गुणगुण्यादि भवेन्नीलोत्पलादिवत्॥४॥ अ

सदादित्रयाभावायद्यप्यात्मन्यवस्थिताः॥ तथापि नविरोधस्या

(आत्मपुराणे)

द्वावाद्वैतत्ववादिनः॥५॥ इ० शंकरानंदैरुक्तं॥ इदं गुण क्रियाजा

तिद्रव्यसबंधवस्तुषु॥ समं तेन स्वरूपस्य सर्वमे तदिति ष्यतां॥१

निवर्तंते

यतोवाचो० इ० श्रु०॥ – लयविक्षेपयोः संधौ मनस्तत्र निरामि

षं॥ ससंधिः साधितोयेन समुक्तो नात्र संशयः॥१॥ इ० सदा ⁘

⁘ चारे तथाच लघुवाक्य वृत्यां – नष्टे पूर्व विकल्पेतु यावदन्यस्य नोदयः॥ निर्विकल्पक चैतन्यं स्पष्टं तावद्विभासते॥१॥ तथाच केनोपनिषदि – यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति॥ तदेव ब्रम्ह त्वं विद्धि नेदं यदिदमुपासते॥ इत्याद्यनेक श्रुतयः॥ इ० अ० तृतीयः सर्गः॥ ६॥



॥ सर्ग ४॥

श्रीगु०॥ ॐ किं शबलं ब्रम्ह॥ – अव्यक्ता० इ० नि० मूल श्रु०॥ तस्माद्वा

तैत्तिरीय

एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः॥ इति श्रुतिः॥

मूकमा

तथाच कैवल्योपनिषदि – एतस्माज्जाय० इति॥ – ऐशी या प्रकृति०

– अध्या० रा०॥ त्वदाश्रयात्वद्विषया मायातेशक्तिरुच्यते॥ अव्याकृत

मिति प्राहुर्वेदांत परिनिष्ठिताः॥ मूलप्रकृतिरित्येके प्राहुर्मायेति

केचन॥१॥ त्वया संक्षोभ्यमाणासा महत्तत्वं प्रसूयते॥ महत्तत्वादहं

कारस्त्वयासंचोदितादभूत्॥२॥ अहंकारो महत्तत्व संवृतस्त्रिगु

णोभवत्॥ सात्विको राजसश्चैव तामसश्चेति भण्यते॥३॥ – तेंचि

सविस्तर कथन॥ – ३५ – तामसात्सूक्ष्मतन्मात्राण्यासन् भूतान्य

तःपरं॥ राजसानींद्रियाण्येव सात्विका देवतामनः॥४॥ तेभ्योभव

त्सूत्ररूपं लिंगं सर्वगतं महत्॥ ततो विराट्समुत्पन्नः स्थूलाद्भूत

(पंचदश्यां)

कदंबकात्॥२॥ इ०॥ सत्वांशैः पंचभिस्तेषां क्रमाद्धींद्रिय पंचकं॥

श्रोत्रत्वगक्षिरसन घ्राणाख्यमुपजायते॥१॥ तैरंतःकरणं स ⁘

⁘ र्वैर्वृत्तिभेदेन तद्द्विधा॥ मनोविमर्श रूपं स्याद्बुद्धिः स्यान्निश्चयात्मिका॥२॥ (पंचदश्यां)

रजोंशैः पंचभिस्तेषां क्रमात्कर्मेंद्रियाणितु ॥ वाक्पाणि पाद पायूप
श्रुति
स्छाभिधानानिजज्ञिरे ॥३॥ तैः सर्वैः सहितः प्राणो भेदात्स पंच (पंचदश्यां)
धा ॥ प्राणोपानः समानश्चोदानव्यानौचतेपुनः ॥४॥ इ० विद्या०॥
तोगुणतारतम्यभाव ॥५५॥ त्रिविधात्रिविधैषातु विज्ञेया गौणि
कीगतिः ॥ अधमा मध्यमाग्र्याच कर्मविद्या विशेषतः ॥४१॥ स्था
शव
वराः कृमिकीटाश्च मत्स्याः सर्पाः सकच्छपाः ॥ पश्च मृगाश्चैव
जघन्यातामसीगतिः ॥४२॥ हस्तिनश्च तुरंगाश्च शूद्राम्लेच्छा
श्चगर्हिताः ॥ सिंहाव्याघ्रानराहाश्च मध्यमातामसी गतिः ॥४३॥
चारणाश्चसुपर्णाश्च पुरुषाश्चैव दांभिकाः ॥ रक्षांसिच पिशाचा
श्च तामसीषूत्तमागतिः ॥४४॥ झल्लामल्लानराश्चैव पुरुषाः शस्त्र
वृत्तयः ॥ द्यूत पान प्रसक्ताश्च जघन्या राजसीगतिः ४५॥ राजानः
क्षत्रियाश्चैव राजांचैव पुरोहिताः ॥ वादयुद्ध प्रधानाश्च मध्यमा
राजसीगतिः ॥४६॥ गंधर्वा गुह्यकायक्षा विबुधानुचराश्चये ॥ ∺

∺ तथैवाप्सरसः सर्वा राजसीषूत्तमागतिः ॥४७॥ तामसा यतयो विप्रा ये च वैमानिकागणाः ॥
नक्षत्राणि च दैत्याश्च प्रथमा सात्विकी गतिः ॥४८॥



यज्वान ऋषयो वेदा देवाज्योतींषि वत्सराः ॥ पितरश्चैव साध्याश्च
द्वितीयासात्विकीगतिः ॥४९॥ ब्रम्हाविश्वसृजो धर्मो महानव्यक्त मे
वच ॥ उत्तमांसात्विकी मेतां गतिमाहुर्मनीषिणः ॥५०॥ मनुस्मृ० अ० १२
तोचि पंचीकृतप्रकार ॥६२॥ तमः प्रधान प्रकृतेस्तद्भोगायेश्वराज्ञ
या ॥ वियत्पवन तेजोंबु भुवो भूतानि जज्ञिरे ॥१॥ त[illegible]द्भोगाय
पुनर्भोग्यं भोगायतन जन्मने ॥ पंचीकरोति भगवान् प्रत्येकं वि
धा
यदादिकं ॥२॥ द्विधाविधाय चैकैकं चतुर्धा प्रथमं पुनः ॥ स्वस्वेत
रद्वितीयांशैर्योजनात्पंच पंचते ॥३॥ इ० पंचदश्यां - अथरामगी०
रसादिपंचीकृत भूतसंभवं भोगालयं दुःखसुखादिकर्मणां ॥ श
रीरमाद्यंतवदादि कर्मजं मायामयं स्थूलमुपाधिमात्मनः ॥१॥
मानिजज्ञिरे
पुरुषसूक्ते - सहस्र० - ऋच० सा० इ० मायांतु प्रकृतिं विद्यान्मायि
नंतु महेश्वरं ॥ अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ इ० श्रु०
अनापन्नविकारः सन्नयस्कांतवदेवयः ॥ बुद्ध्यादींश्चालयेत्स ∺

∺ एकमोहमित्य वधारयेत् ॥१॥ इतिभाष्यकारैरुक्तं ॥ इ० ३१० चतुर्थः सर्गः ॥४॥

⁘ दोनां विनियोजनं ॥२॥

श्रीगु०॥ ॐ क ईश्वरः॥ एतल्लक्षणं० इ० नि० मू० श्रु०॥ शबल ब्रम्ह जें बो
लिलें॥ इ० - सत्वशुद्ध्य विशुद्धिभ्यां मायाविद्ये च ते मते॥ मायाबिंबो व
शीकृत्य तां स्यात् सर्वज्ञ ईश्वरः॥१॥ इ० पंचद०॥ यताच श्रु० - जीवेशा
वभासेन करोति माया चाविद्या चेति॥ देहीं आनंदमयकोश॥२६॥
देहादभ्यंतरः प्राणः प्राणादभ्यंतरं मनः॥ ततः कर्ता ततो भोक्ता गुहा
सेयं परंपरा॥१॥ अहं वृत्तिरिदं वृत्तिरित्यंतःकरणं द्विधा॥ विज्ञा
नं स्यादहं वृत्तिरिदं वृत्तिर्मनो स्फुटं॥२॥ ईशकार्यं जीवभोग्यं ज
गत् द्वाभ्यां समन्वितं॥ पितृजन्या भर्तृभोग्या यथा योषित्तथे
ष्यतां॥३॥ चंद्रमा मनसो०॥ अग्निर्वाग्भूत्वा मुखं प्राविशत्॥ सोका
मयत बहु स्यां प्रजायेयेति स तपोतप्यत स तपस्तप्त्वा इदं सर्वम
सृजत यदिदं किंच॥ इत्याद्यनेक श्रुतयः॥ सप्तान्न ब्राम्हणे द्वैतं जी
व सृष्टं प्रपंचितं॥ अन्नानि सप्त ज्ञानेन कर्मणा जनयत्पिता॥१॥
मर्त्यान्नमेकं देवान्ने द्वे पश्वन्नं चतुर्थकं॥ अन्नत्रयमात्मार्थम ⁘



⁘ पितरः प्राणो मनुष्याः॥ वाङ्माता मनः पिता प्राणः प्रजाः इति॥-

श्रीह्यादिकं दर्शपूर्णमासो क्षीरं तथा मनः॥ वाक्प्राणश्चेति सप्तत्वम
न्नानामवगम्यतां॥३॥ ईशेन यद्यप्येतानि निर्मितानि स्वरूपतः॥
तथापि ज्ञानकर्मभ्यां जीवोकार्षीत्तदन्नतां॥४॥ इ० पंच०॥ पृथिवी
म्हणिजे अन्न जाणा - ५८॥ यदग्ने रोहितं रूपं यच्छुक्लं तदपांय
त्कृष्णं तदन्नं स्यात्॥ इ० छांदोग्य श्रुतिः॥ - वाचेचें रूप हा भूलोक इ०
६४
आचार्यो ब्रम्हणो मूर्तिः पिता मूर्तिः प्रजापतेः॥ माता पृथिव्या मूर्तिस्तु
भ्राता स्वो मूर्तिरात्मनः॥२२५॥ त एव हि त्रयो लोकास्त एव त्रय आ
श्रमाः॥ त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः॥२३०॥ पिता वै
गार्हपत्योऽग्निर्माताऽग्निर्दक्षिणः स्मृतः॥ गुरुराहवनीयस्तु सा
ग्नित्रेता गरीयसी॥२३१॥ इमं लोकं मातृभक्त्या पितृभक्त्या च म
ध्यमं॥ गुरु शुश्रूषया त्वेवं ब्रम्हलोकं समश्नुते॥२३३॥ - मनुस्मृ०
अ० २
शतपथ ब्राम्हणे - वाग्भूर्लोको मनोंतरिक्षो लोकः प्राणो देव लोक
इति॥ वाक् ऋग्वेदो मनो यजुर्वेदः प्राणः सामवेदः वाग्देवाः मनः ⁘

तामसतेजोभागें अस्थि-६९॥ तेजसोस्थिःस्थ विष्ठस्यान्मज्जामध्य समुद्भवा॥ अन्विष्टो तस्तस्मात्ते वर्णात्मकं जगत्॥१॥ अपांस्थ विष्ठो मूत्रःस्यान्मध्य मोरुधिरंभवेत्॥ अन्विष्ठ भागः प्राणःस्यात्तस्मा प्राणोजलात्मकः॥२॥ मलःस्थ निष्ठोभागःस्यान्मध्यमोमांसतांब्रजेत्॥ मनःकनिष्ठभागःस्यात्तस्मादन्नमयंमनः॥३॥ इति शिवगीतायां- तथाच छांदोग्ये-अन्नमयं हि सोम्यमनःआपो मयःप्राणःतेजोमयी वागिति॥ कांहीं इं संबंधावांचोन-८०॥ यथाचित्रपटे दृष्टमवस्थानांचतुष्टयं॥ परमात्मनि विज्ञेयं तथा ऽवस्थाचतुष्टयं॥१॥ यथा धौतो घट्टितश्चलांच्छितो रंजितःपरः॥ चिदंतर्यामिसूत्रात्मा विराट्चात्मा तथेर्यते॥२॥ स्वतःशुभ्रोत्र धौतःस्यात् घट्टितोन्नविलेपनात्॥ मष्याकारैर्लांच्छितःस्याद्रंजितो वर्णपूरणात्॥३॥ चित्रार्पितमनुष्याणां वस्त्राभासाः पृथक् पृथक्॥ चित्राधारेण वस्त्रेण सदृशा इव कल्पिताः॥४॥ चित्रस्थपर्वतादीनां वस्त्राभासो न लिख्य-

(margin:) ता॥ सृष्टि मूर्तिकादीनां चिदाभासस्यभानं हि॥ ५॥



(margin:) पुनः॥ चिच्छायालिंगदेहस्था तत्संघो जीव उच्यते॥१॥

वस्त्राभासःस्थिता नां वर्णान्यद्वदा धारवस्त्रगान्॥ वदंत्यज्ञास्तथा जीवसंसारंचिद्गतं विदुः॥६॥ इति (पंचदश्याश्चित्र) दीपे विद्यारण्यः-अंतर्यामिशबलब्रम्ह-८१॥ ईश्वरःसर्वभूतानां हृद्देशेऽर्जुन तिष्ठति॥ भ्रामयन् सर्वभूतानि यंत्रारूढानि मायया॥१॥ इ० भगवद्गीतायां॥- याच्याचिभयेंवायु वाहे॥८२॥- अस्मिनर्थे तैत्तिरीयश्रुतिः॥-भीषास्माद्वातः पवते भीषोदेति सूर्यः॥ भीषास्मादग्निश्चेंद्रश्च मृत्युर्धावति पंचम इति॥- जगतोयमुपादानं मायामादायतामसीं॥ निमित्तं शुद्धसत्वांता मुच्यते ब्रम्ह तद्गिरा॥१॥ जीवांतत्तत्कर्मानुसारीं ८४ -नादत्ते कस्यचित्पापंनचैव सुकृतं विभुः॥८३॥ याचें बुद्धिदेणें परम॥८५॥- ददामिबुद्धियोगंतं येनमामुपयांतिते॥६॥ क्लेशकर्मविपाकाशयैरपरामृष्टःपुरुषविशेष ईश्वरः-इतिपतंजलिसूत्रं॥ इ० अं० पं० सर्गः

सर्ग ५ श्रीगु०॥ ॐ कोजीवः॥ इ० नि० मू० श्रु०॥ ब्रम्हाविष्णु विश्वे० ब्रम्हाविष्णु विश्वेशइंद्र-मूळमायामूळस्फुरण॥१-२-३-४-॥- चैतन्यं यदधिष्ठानं लिंगदेहश्चयः

मोहेश्वरीतुयामाया तस्या निर्माण शक्तिवत्॥ विद्येत मोहशक्तिश्च

तंजीवं मोहयत्यसौ॥२॥ मोहादनीशतां प्राप्य मग्नोवपुषिशोचति

(पंचदश्यां)

इतिविद्यारण्यः॥ अत्रश्रुतिः तत्सृष्ट्वा तदेवानुप्राविशत्॥-

(पंचदश्यां)

कृत्वारूपांतरं जैवं देहे प्राविशदीश्वररिति - जलव्योम्नाघटा

काशो यथासर्वस्तिरोहितः॥ तथाजीवेन कूटस्थः सोन्योन्याध्या

सउच्यते॥१॥ तथा- अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा॥

साकारण शरीरंस्यात्प्राज्ञस्तत्राभिमानवान्॥१॥ हिरण्यगर्भः

स्थूलेऽस्मिन् देहे वैश्वानरोभवेत्॥ तैजसा विश्वतां याता देव

तिर्यङ्नरादयः॥२॥ -श्रोतेम्हणती सत्वोपाधी ७५॥ - सर्वं विष्णु

मयंजगत्॥ तथा- शिवः मरम कारणं॥ इतिश्रुती॥ माधवो माध

वावीशौ सर्वसिद्धिविधायिनौ॥ वंदे परस्परात्मानौ परस्परनु

ति प्रियौ॥१॥ इतिश्रीधराचार्यः॥ तथाच बृहन्नारदीयेनारदः॥

अनादिनिधने देवे हरिशंकर संज्ञिते॥ संसार सागरे मग्नाः

श्लो.१ भेदं अर्वाचीनः॥१॥



तोचिभेद सृष्टिकारण ५१॥ - ईशेन यद्यप्येतानि निर्मितानि स्वरू

पतः॥ तथापिज्ञान कर्मभ्यां जीवोकर्षित् दन्यतां॥१॥ ज्ञानं विहि

तं प्रतिषिद्धंच देवतापरयोषिदादिविषयं॥ तथा कर्मपि विहि

षं प्रतिषिद्धं यज्ञादिरूपं हिंसादिरूपंच॥ ईश्वरें जेंजें कांहि केलें

५३

- ईशकार्यं जीवभोग्यं जगत् द्वाभ्यांसमन्वितं॥ पितृजन्या भ

र्तृभोग्या यथा योषित्तथेष्यतां॥१॥ मायावृत्यात्मको हीश संक

ल्पः साधनंजनौ॥ मनोवृत्यात्मको जीव संकल्पो भोगसाधनं॥

२॥ व्यष्टीं जीन भेदलाकैसा ५८॥ - एकएवहिभूतात्मा भूतेभू

इ० श्रुतिः

तेव्यवस्थितः॥ एकधा बहुधाचैव दृश्यते जलचंद्रवत्॥१॥

भार्यास्नुषाननांदाच याता मातेत्यनेकधा॥ प्रतियोगिधिया

योषिद्भिद्यते न स्वरूपतः॥१॥ नैवं मांसमयी योषित्काचिदन्या

मनोमयी॥ मांसम[illegible]य्या अभेदेपि भिद्यते हि मनोमयी॥२॥

असत्यपिच बाह्यार्थे स्वप्नादौ बध्यते नरः॥ समाधिसुप्तिमू

जीवसृष्टि बंधाचा हेतु ॥३॥

॥ अनेनायं सर्वं भ्रम इतीरितः॥२॥

अन्वयव्यतिरेकाभ्यां धीमयो जीव बंधकृत्॥ सत्यस्मिन् सुख

(पंचदश्यां)

दुःखे स्तस्तस्मिन्नसति न द्वयं॥४॥ यत्सत्वे यत्सत्वं अन्वयः यदभा
वे यदभावो व्यतिरेकः॥ मन एव मनुष्याणां कारणं बंधमोक्षयोः

(श्रुतिः)

बंधाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतं॥५॥ बंधश्चेन्मान
सं द्वैतं तन्निरोधेन शाम्यति॥ अभ्यसेद्योगमेवातो ब्रम्हज्ञानेन किं
वदः॥ — तात्कालिक द्वैतशांतावप्यागामिजनिक्षयः॥ ब्रम्हज्ञा
नं विनानस्यादिति वेदांत डिंडिमः॥७॥ अनिवृत्तेपीशसृष्टे द्वै
ते तस्य मृषात्मतां॥ बुध्वा ब्रम्हाद्वयं बोध्धुं शक्यं वस्त्वैक्यवा
दिनः॥२॥ प्रलये तन्निवृत्तौ तु गुरुशास्त्राद्यभावतः॥ विरो
धि द्वैताभाने पि न शक्यं बोधुमद्वयं॥३॥ जीवन्मुक्तेः पराका
ष्ठा जीवद्वैतविवर्जनात्॥४॥ — नाप्रतीतिस्तयोर्बाधः किंतु मि
थ्यात्वनिश्चयः॥ नोचेत्सुषुप्तिमूर्छादौ मुच्येतायत्नतो जनः
॥५॥ अयं यत्सृजते विश्वं तदन्यथयितुं पुमान्॥ न कोपि शक्तः



॥ प्रीतिः॥ द्वेषः — अप्रीतिः॥ अभिनिवेशः॥ — कर्ता भोक्ता इत्यादि बुद्धिः॥

देहादि पंजरं यंत्रं तद्वारो हो भिमानिता॥ विहितप्रतिषिद्धाभ्यां
प्रवृ[illegible]त्तिर्भ्रमणं भवेत्॥३॥ अबाधकं साधकं च द्वैतमीश्व
र निर्मितं॥ अपनेतुमशक्यं चेत्यास्तां तत् द्विष्यतः कुतः॥४॥
जीवद्वैतं तु शास्त्रीयमशास्त्रीयमिति द्विधा॥ उपाददीत शा
स्त्रीयमातत्वस्यावबोधनात्॥५॥ आत्मब्रम्हविचाराख्यं
शास्त्रीयं मानसं जगत्॥ बुद्धे तत्वे तच्च हेयमिति श्रुत्यनुशास

(पंचदश्यां)

नं॥६॥ इति विद्यारण्यः॥ — क्लेशकर्मविपाकाशय॥७॥ क्लेशा
दि पंचकतरंगयुगं भ्रमाढ्यं दारात्मजाप्त धनबंधुझषाभियुक्तं
॥ और्वानलाभनिजरोषमनंगजालं संसारसागरमतीत्य ह
रिं व्रजामि॥७॥ इति अ० रामायणे॥ अविद्याऽस्मितारागद्वेषा
ऽभिनिवेशाः पंचक्लेशाः॥ अविद्या का — अनित्याशुचिदुःख
रूपानात्मसु नित्यशुचिसुखात्मख्यातिः॥ अस्मिता का॥ —
शरीराद्यतिरिक्त आत्मानास्तीत्येवं प्रत्ययः॥ रागः — विष

इंद्रियांचा जो व्यापार ८७ - कर्म च चतुर्विधं ॥ शुक्लं - कृष्णं -
शुक्लकृष्णं - अशुक्लाकृष्णमिति ॥ शुक्लं नाम - काम्यरहितं वि
हितं कर्म ॥ कृष्णं - काम्यसहितं निषिद्धं कर्म ॥ शुक्लकृष्णं - का
म्यसहितं विहितं यज्ञादिरूपं कर्म ॥ इतरमशुक्लाकृष्णं - ॥
विपाकस्त्रिविधः - जात्यायुर्भोगरूपः ॥ आशयः - पुण्यपापसं
स्कारः ॥ इति पतंजलिनाउक्तं ॥ ह्रास्वकीय कर्मानुसार ९१ ॥ -
जीवा नियम्या भगवान्नियंता तत्प्रेरकोऽन्तर्याम[illegible]क एष नित्यः
॥ इत्यादि शास्त्रे बहुता वदे व ब्रम्हा सभानं नहि याव दस्ति ॥१॥
तादात्म्यं नाम - तद्भिन्नेसति तदभिन्नसत्ताकत्वं ॥ इ० अ० प० स०
श्रीगु० ॥ ॐ का प्रकृतिरिति ॥ ब्रम्हणः सकाशान्नाना ॥ इ० नि० मू० शु०
परब्रम्ह जें परात्पर ॥ ६० ॥ इदं सर्वं पुरासृष्टेरेकमेवाद्वितीयकं ॥
सदेवासीन्नामरूपे नास्तामित्यारुणेर्वचः ॥१॥ आरुणिः उद्दा
लकः ॥ अत्यंत थोराहुनी थोर ५ - अणोरणीयानहमेव तद्व

(margin) महानहं० इति कैवल्यश्रुतिः ॥

(margin) सर्ग ७



कीं प्रागभाव प्रध्वंसाभाव ७ ॥ कदाचिदात्मा न मृतो न जायते नक्षी
यते नापि विवर्द्धते नवः ॥ निरस्तसर्वातिशयः सुखात्मकः स्वयं
प्रभः सर्वगतोऽयमद्वय ॥३५॥ इति रामगीता ॥ नव्यापित्वाद्देशतो
तो नित्यत्वान्नापि कालतः ॥ न वस्तुतोऽपि सार्वात्म्यादानंत्यं ब्रम्हणि
त्रिधा ॥१॥ सकळ कांहीं दृश्य भास ८ ॥ - सर्वेत्ति वेद्यं तत्सर्वं ना
न्यस्तस्यास्ति वेदिता ॥ विदिताऽविदिताभ्यां तत्पृथक् बोधस्व
रूपकं ॥१॥ - दुःखाभावीं उपजे सुख ७ - सत्यत्वें ब्रम्ह एक जैसें ९२
एकमेवाद्वितीयं सत् सिद्धमत्र तु केचन ॥ विह्वला असदेवेदं पुरा
सीदिति वर्णयन् ॥१॥ मग्नस्याब्धौ यथाक्षाणि विह्वलानि त
थास्य धीः ॥ अखंडैकरसं श्रुत्वा निःप्रचाराबिभेत्यतः ॥२॥
गौडाचार्या निर्विकल्पे समाधावन्ययोगिनां ॥ साकारब्रम्हनि
ष्ठानामसंतं भयमूचिरे ॥३॥ इति भाष्यकारः ॥ - स्फुरणसत्य ना
हीं झालें ॥२५॥ - निस्तत्वा कार्यगम्यास्य स्याच्छक्तिर्मायाग्निशक्ति

(margin) वत् ॥ नहि शक्तिं क्वचित्कैश्चिद् बुध्यते कार्यतः पुरा ॥१॥ निद्राशक्तिर्यथा जीवे दुर्घटः स्वप्नकारिणी ॥ ब्रम्हण्येषा तथा माया सृष्टिस्थित्यंतकारिणी ॥२॥ इ० विद्यारण्यः

अनात्मनि शरीरादावात्मबुद्धिस्तु या भवेत् ॥ सैव माया तयैवासौ संसा
रः परिकीर्त्यते ॥१॥ इ० अ० रामा० ॥ मायातेंच घडेल सत्य -२८- का
र्याच्या मिथ्यत्वानें कारण मिथ्याच असे दृष्टांत ॥ मृगतृष्णाजलं
पीत्वा तृप्तिश्चेद् स्त्विदं जगत् ॥ गंधर्वनगरे सत्ये जगद्भवति स
र्वदा ॥१॥ इदं प्रपंचं यत्किंचिद्यद्यज्जगति वीक्ष्यते ॥ दृश्यरूपं च
दृग्रूपं सर्वं शशविषाणवत् ॥२॥ गगने निलिमा सत्ये जगत्स
अगद्भवेत् ॥
त्यं भविष्यति ॥ मासात्पूर्वं मृतो मर्त्यो ह्यगतश्चे [illegible]
॥३॥ गोस्तनाद् उद्भवं क्षीरं पुनरारोपणे जगत् ॥ ज्वालाग्निमंडले
पद्मवृद्धिश्चेदस्त्विदं जगत् ॥४॥ ज्ञानिनो हृदयं मूढैर्ज्ञातं चेदस्त्वि
दं जगत् ॥ सर्वथा भेदकलनं द्वैताद्वैतं न विद्यते ॥५॥ इदं प्रपंचं
नास्त्येव नोत्पन्नं नोस्थितं जगत् ॥ चित्तं प्रपंच मित्याहुर्नास्ति ना
स्त्येव सर्वदा ॥६॥ नास्ति नास्ति जगत्सर्वं गुरुशिष्यादिकं नहि ॥
सच्चिदानंदमात्रोऽहमनुत्पन्नमिदं जगत् ॥७॥ इ० श्रुतयः ॥



विचारें माया मिथ्या तुच्छ -४०- तुच्छा निर्वचनीयाच वास्तवीचे
त्यसौ त्रिधा ॥ ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥१
॥ शक्तिः कार्यानुमेयत्वाद कार्यप्रतिबंधनं ॥ ज्वलतोग्नेरदाहस्या
न्मंत्रादि प्रतिबंधतः ॥२॥ शक्तिः शक्तात्पृथक् नास्ति तद्वत् दृष्टे
र्न चाभिदा ॥ प्रतिबंधस्य दृष्टत्वाच्छक्त्यभावे तु कस्य सः ॥३॥ स्व
प्नविपद्भृतिं पश्ये स्वमूर्धच्छेदनं यथा ॥ मुहूर्ते वत्सरौघं च मृतं
इति (पंचदश्यां)
पुत्रादिकं पुनः ॥४॥ मायीक होतां साच माने -५१- मायासीतात
दापश्यन्मृगं मायाविनिर्मितं ॥ हसंति राममभेत्य प्रोवाच विन
यान्विता ॥१॥ पश्य राम मृगं चित्रं कानकं रत्नभूषितं ॥ विचित्रबिं
दुभिर्युक्तं चरंतमकुतोभयं ॥२॥ बध्वा देहि ममक्रीडामृगो भ
(उ० रामा०)
वतु सुंदरः ॥७॥ भ्रमिष्टा शीभ्रमजो झाला -५८- साभासबुद्धेः
कर्तृत्वमविच्छिन्नेऽविकारिणि ॥ साक्षिण्यारोप्यते भ्रांत्या जीव
त्वं च तथाऽबुधैः ॥१॥ इ० विचार [illegible] - मायीक सृष्टि न सत्ता दिसे ६१

नवेत्ति लोको यावत्तं साक्षात्तावत्स्वमत्कृतिं। धत्ते मनसि पश्चात्तु

मायैवेत्युपशाम्यति॥१॥ विस्मयैकशरीराया मायायाश्चोद्यरूप

(पंच०)

तः॥ अन्वेष्यः परिहारोस्या बुद्धिमद्भिः प्रयत्नतः॥२॥ म्हणोनि

यांप्रत्यक्षसृष्टिन्‌-६५- परंतु हे अखंडानंती-७३- निच्छिद्रे दर्पणे

भाति वस्तुगर्भं यथा वियत्। सच्छिद्रे न तथा नाना जगद्गर्भमि

दं वियत्॥१॥ इ० विद्या० - परी एक संदेह मना-७५- क्रिया शरीरो

द्भव हेतुरादृता प्रियाप्रियौ तौ भवतः सुरागिणः॥ धर्मेतरौ तत्र पु

नः शरीरकं पुनः क्रियाश्चक्रवदीर्यते भवः॥८॥ अज्ञानमेवा

स्य हि मूलकारणं तद्धानमेवात्र विधौ विधीयते॥ विद्यैव तन्ना

श विधौ पटीयसी न कर्म तज्जं सविरोधमीरितं॥९॥ इ० रामगी०

इ० अ० सप्तमसर्गः॥५॥॥ श्रीहंसगु०॥ ॐ कः परमात्मेति॥

सर्ग ८ देहादेः प० इ० नि० मू० श्रु०॥ परात्पर जें परब्रम्ह॥१-२॥ एष सर्वे

श्वर एषोंतर्यामि० — स आत्मा स विज्ञेयः॥ इ० मांडुक्य श्रु०॥



देहादिक म्हणजे को[illegible]ण ४॥-८॥ स्थूलो मांसमयो देहः सूक्ष्मः स्याद्वास

नामयः॥ ज्ञानकर्मेंद्रियैः सार्द्धं धीः प्राणौ तच्छरीरगौ॥१॥ अज्ञानकारणं

साक्षि बोधस्तेषां विभासकः॥ बोधाभासो बुद्धिगतः कर्तास्यात्पुण्य पापयोः

॥२॥ इति लघुवाक्यवृत्त्यां॥ स्थूलाची अवस्था जागृति॥१०-२३॥ - बहिः

प्रज्ञो विभुर्विश्वो ह्यंतः प्रज्ञस्तु तैजसः॥ घनप्रज्ञस्तथा प्राज्ञ एक एव त्रि

धा स्थितः॥१॥ दक्षिणाक्षिमुखे विश्वो मनस्यंतस्तु तैजसः॥ आकाशे

च हृदि प्राज्ञो त्रिधा देहे व्यवस्थितः॥२॥ विश्वो हि स्थूलभुङ्नित्यं तैज

सः प्रविविक्तभुक्॥ आनंदभुक् तथा प्राज्ञस्त्रिधा भोगं निबोधत॥३॥

स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसं॥ आनंदस्तु तथा प्राज्ञं त्रिधा

तृप्तिं निबोधत॥४॥ इति ग्रंथांतरे॥ - परि मुख्य वेदसंमत॥२४-८८॥

कूटस्थादि शरीरांत संघातस्यात्मतां जगुः॥ लोकायताः पामराश्च

प्रत्यक्षाभासमाश्रिताः॥१॥ श्रौतिकर्तुं स्वपक्षं ते कोशमन्नमयं तथा॥

विरोचनस्य सिद्धांतं प्रमाणं प्रतिजज्ञिरे॥२॥ जीवात्म निर्गमे देहे म

नं: रणस्थाने दर्शनात्॥ देहा[illegible] तिरिक्त एवात्मेत्याहुर्लोकायताः परे॥३॥

वागादीनामिंद्रियाणां कलहः श्रुतिषु श्रुतः ॥ तेनचैतन्यमेतेषामा

त्मत्वं ततएवहि ॥४॥ हैरण्यगर्भाः प्राणात्मवादिनस्त्वेवमूचिरे ॥

चक्षुराद्यक्षलोपेपि प्राणसत्वेतु जीवति ॥५॥ मनआत्मेति मन्यंत

उपासनपराजनाः ॥ प्राणस्याभोक्तृतास्पष्टा भोक्तृत्वं मनसस्ततः ॥

६॥ मनएवमनुष्याणां कारणं बंधमोक्षयोः ॥ बंधाय विषयासक्तंमु

क्त्यैनिर्विषयंस्मृतं ॥७॥ विज्ञानमात्मेति पर आहुः क्षणिकवादिनः

॥ यतो विज्ञानमूलत्वं मनसोगम्यते स्फुटं ॥८॥ अहंवृत्तिरिदंवृत्ति

रित्यंतःकरणं द्विधा ॥ विज्ञानंस्यादहंवृत्तिरिदंवृत्तिर्मनोभवेत् ॥

९॥ विज्ञानमयकोशोयंजीवइत्यागमाजगुः ॥ सर्वःसंसार एतस्य

जन्मनाशसुखादिकः ॥१०॥ विज्ञानं क्षणिकं नात्मा विद्युदभ्रनिमे

षवत् ॥ अन्यस्यानुपलब्धत्वाच्छून्यं माध्यमिकाजगुः ॥११॥ असदे

वेदमित्यादाविदमेव श्रुतंततः ॥ ज्ञानज्ञेयात्मकं सर्वं जगद्भ्रांति

प्रकल्पितं ॥१२॥ निरधिष्ठानविभ्रांतेरभावादात्मनोस्तिता ॥ ∴

∴ भूम्नस्यापि स्वसाक्षित्वादन्यथा नोपलिरस्यते ॥१३॥





अन्यो विज्ञानमयतआनंदमयआंतरः ॥ अस्तीत्येवोपलब्धव्य इ

ति वैदिकदर्शनं ॥१४॥ - अणुं वदंत्यांतराला: सूक्ष्मनाडिप्रचार

तः ॥ रोम्णः सहस्रभागेन तुल्यासु प्रचरत्ययं ॥१॥ दिगंबरामध्य

मत्वमाहुरापादमस्तकं ॥ चैतन्यव्याप्तसंदृष्टेरानखाग्रश्रुतेरपि

॥२॥ सूक्ष्मनाडिप्रचारस्तु सूक्ष्मैरवयवैर्भवेत् ॥ स्थूलदेहस्य

हस्ताभ्यां कंचुकप्रतिमोकवत् ॥३॥ न्यूनाधिकशरीरेषु प्रवेशोपि

गमागमौ ॥ आत्मांशानां भवेत्तेन मध्यमत्वं सुनिश्चितं ॥४॥ सांश

स्य घटवन्नाशो भवत्येव तथासति ॥ कृतनाशाकृताभ्यागमयोः

को वारको भवेत् ॥५॥ तस्मादात्मा महानेव नैवाणुर्नापिमध्य

मः ॥ आकाशवत्सर्वगतो निरंशः श्रुतिसंमतः ॥६॥ प्राभाकरा

स्तार्किकाश्च प्राहुरस्याचिदात्मतां ॥ आकाशवद्द्रव्यमात्माश

ब्दवत्तद्गुणश्चितिः ॥१॥ इच्छाद्वेषप्रयत्नाश्च धर्माधर्मौ सुखा

सुखे ॥ तत्संस्काराश्च तस्यैते गुणाश्चितिवदीरिताः ॥२॥

गूढं चैतन्यमुत्प्रेक्ष्य जडबोधस्वरूपतां॥ आत्मनो ब्रुवते भाट्टाश्चि
दुत्प्रेक्षोत्थितः स्मृतेः॥३॥ जडो भूत्वा तदा स्वाप्समिति जाड्यस्मृ
तिस्तदा॥ विना जाड्यानुभूतिं न कथंचिदुपपद्यते॥४॥ निरंशस्यो
भयात्मत्वं न कथंचिद्घटिष्यते॥ तेन चिद्रूप एवात्मेत्याहुः सांख्या
विवेकिनः॥५॥ जाड्यांशः प्रकृते रूपं विकारी त्रिगुणं च तत्॥ चि
तो भोगापवर्गार्थं प्रकृतिः सा प्रवर्तते॥६॥ चित्संनिधौ प्रवृत्तायाः
प्रकृतेर्हि नियामकं॥ ईश्वरं ब्रुवते योगाः स जीवेभ्यः परः श्रुतः
॥७॥ प्रधानक्षेत्रज्ञपतिर्गुणेश इति हि श्रुतिः॥ आरण्यके संभ्र
मेणह्यंतर्याम्युपपादितः॥८॥ क्लेशकर्मविपाकैस्तदाशयैरप्य
संयुतः॥ पुंविशेषो भवेदीशो जीववत्सोप्यसंगचित्॥९॥ तथा
पि पुंविशेषत्वाद्घटतेस्य नियंतृता॥ अव्यवस्थौ बंधमोक्षावाप
तेतामिहान्यथा॥१०॥ नित्यज्ञानप्रयत्नेच्छागुणानीशस्य
मन्वते॥ असंगस्य नियंतृत्वमयुक्तमिति तार्किकाः॥११॥



पुंविशेषत्वमप्यस्य गुणैरेव न चान्यथा॥ सत्यकामः सत्यसंकल्प
इत्यादिश्रुतिजेगो॥१२॥ नित्यज्ञानादिमत्वेस्य सृष्टिरेव सदा भवे
त्॥ हिरण्यगर्भ ईशोतो लिंगदेहेन संयुतः॥१३॥ स्थूलदेहं विना लिं
गदेहो न क्वापि दृश्यते॥ वैराजो देह ईशोतः सर्वतो मस्तकादिमा
न्॥१४॥ सर्वतः पाणिपादत्वे कृम्यादेरपि चेशता॥ ततश्चतुर्मु
खो देह एवेशो नेतरः पुमान्॥१५॥ पुत्रार्थं तमुपासीना एवमाहुः
प्रजापतिः॥ प्रजा असृजतेत्यादिश्रुतेश्चोदाहरंत्यमी॥१६॥ वि
ष्णोर्नाभेः समुद्भूतो वेधाः कमलजस्ततः॥ विष्णुरेवेश इत्याहु
र्लोके भागवता जनाः॥१७॥ शिवस्य पादावन्वेष्टुं शार्ङ्गी शक्तस्ततः
शिवः॥ ईशो न विष्णुरित्याहुः शैवा आगममानिनः॥१८॥ पुरत्र
यं साधयितुं विघ्नेशं सोप्यपूजयत्॥ विनायकं प्राहुरीशं गाणपत्य
मते रताः॥१९॥ तदंतर्भगवानेष सूर्यः समभवत्पुरा॥ आदित्यश्चा
दिभूतत्वात् ब्रम्हा ब्रम्ह पठन्नभूत्॥२०॥ मायां तु प्रकृतिं विद्यान्मा
चिन्मात्रं महेश्वरं॥ अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥२१॥

मायाचेयं तमोरूपातापनीयेतदीरणात् ॥८॥ नयुक्तस्तमसास्फूर्ती

नापिच्चासौत मोमयः॥ सच्छून्ययो विरोधित्वाच्छून्यमासीत्कथंव

द॥२३॥ —शब्दस्पर्शादयोवेद्या वैचित्र्याज्जागरे पृथक्॥ ततोविभ

क्तात्तत्संविदैकरूप्यान्नभिद्यते॥१॥ तथास्वप्नेत्रवेद्यंतुनस्थिरं

जागरे स्थिरं॥ तद्भेदोतस्तयोः संविदेकरूपानभिद्यते॥२॥ सुप्तोत्थि

तस्यसौषुप्त तमोबोधोभवेत्स्मृतिः॥ साचावबुद्धविषयावबुद्धंत

त्तदातमः॥३॥ सबोधोविषयाद्भिन्नोनबोधात्स्वप्नबोधवत्॥ एवं

स्थानत्रयेप्येकासंवित्तद्वत्दिनांतरे॥४॥ मासाब्दयुगकल्पेषुग

तागम्येष्वनेकधा॥ नोदेतिनास्तमेत्येकासंवित् एषास्वयंप्रभा॥५॥
(पं॰च॰द॰)

-ऐसाहासच्चिद्रूपआत्मा-११३॥ - इयमात्मापरानंदः परप्रेमास्पदं

यतः॥ मानभूवंहिभूयासमितिप्रेमात्मनीक्ष्यते॥१॥ तत्प्रेमात्मार्थ

मन्यत्रनैवमन्यार्थमात्मनि॥ अतस्तत्परमंतेन परमानंदतात्म

नः॥२॥ शंका॥ अभानेनपरंप्रेम भानेनविषयस्पृहा॥ अतोभा

∴ नैष्प्रमाताऽसौ परमानंदतात्मनः॥१॥ उत्तर॥ अध्येत्वर्गो मध्यस्थपुत्राध्ययनशब्दवत्॥

भानेप्यभानं भानस्य प्रतिबंधेन युज्यते॥१॥



तस्यहेतुः समानाभिहारः पुत्रध्वनिश्रुतौ॥ इहानादिरविद्यैव

व्यामोहैकनिबंधनं॥२॥ प्रतिबंधोस्तिभातीतिव्यवहाराईवस्तु

नि॥ तंनिरस्यविरुद्धस्यतस्योत्पादनमुच्यते॥३॥ आत्माह्यपूर्णस

च्चित्सुख॥११६॥ - अभानेस्थूलदेहस्यस्वप्नेयद्भानमात्मनः॥

सोन्वयोव्यतिरेकस्तद्भानेन्यानवभासनं॥१॥ लिंगाभानेसुषु

प्तौस्यादात्मनोभानमन्वयः॥ व्यतिरेकस्तुतद्भाने लिंगस्याभान

मुच्यते॥२॥ सुषुप्त्यभानेभानंतुसमाधावात्मनोन्वयः॥ व्यतिरे

कस्त्वात्मभाने सुषुप्त्यनवभासनं॥३॥ - तोआत्माअनुभवायेता॥११७॥

स्वयमेवानुभूतित्वाद्विद्यतेनानुभाव्यते॥ ज्ञातृज्ञानांतराभावा

दज्ञेयोनत्वसत्तया॥१॥ माधुर्यादिस्वभावानामन्यत्रस्वगुणार्पिणां

॥ स्वस्मिंस्तदर्पणापेक्षानोनचास्त्यन्यदर्पकं॥२॥ अर्पकांतरराहि

त्येप्यस्तेषांतत्स्वभावता॥ माभूत्तथानुभाव्यत्वंबोधात्मातुनहीय

यते॥३॥ येनेदंजानतेसर्वंतत्केनान्येनजानतां॥ विज्ञातारंकेन

∴ विंध्याध्ययनकं वैध्येतु साधयनं॥४॥

सर्वेषि वेद्यं तत्सर्वं नान्यस्तस्यास्ति वेदिता ॥ विदिताऽविदिता
भ्यां तत्पृथक् बोधस्वरूपकं ॥५॥ बोधेप्यनुभवो यस्य न कथं
चन जायते ॥ तं कथं बोधयेच्छास्त्रं लोष्टं नरसमाकृतिं ॥६॥
जिह्वा मेस्ति न वेत्युक्तिर्लज्जायै केवलं यथा ॥ न बुध्यते मया बोधो
बोद्धव्य इति तादृशी ॥७॥ नेणोन आनंदासंमुख ॥१४५॥ - काचिदं
तर्मुखा वृत्तिरानंद प्रतिबिंबभाक् ॥ पुण्यभोगे भोगशांतौ निद्रा
रूपेण लीयते ॥१॥ अविद्या उपाधि जीवाची - १४७ - आदौ पदार्था
वगतिर्हि कारणं वाक्यार्थविज्ञानविधौ विधानतः ॥ तत्त्वंपदार्थौ
परमात्म जीवकावसीतिचैकात्म्यमथानयोर्भवेत् ॥२५॥ प्रत्यक्
परोक्षादि विरोधमात्मनोर्विहाय संगृह्य तयोश्चिदात्मताम् ॥ सं
शोधितां लक्षणया च लक्षितां ज्ञात्वा स्वमात्मानमथाद्वयो भवेत् ॥२६
एकात्मकत्वाज्जहतीन संभवेत्तथाजहल्लक्षणाता विरोधतः ॥
सोयंपदार्थाविवभागलक्षणा युज्येत तत्त्वं पदयोरदोषतः ॥ ३०८०
रामगी० ८० ३० अष्टमःसर्गः ॥



श्रीगु० ॥ ॐ केब्रम्हाद्या इति - सब्रम्हा सशिवः० इति नि० मू० श्रु० ॥
परब्रम्ह जें परिपूर्ण - ८ - अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ॥
वेदांतानां प्रवृत्तिः स्याद्विधेत्याचार्यभाषितं ॥१॥ आनंदादेर्विधेयस्य
गुणसंघस्य संहृतिः ॥ आनंदादय इत्यस्मिन्सूत्रे व्यासेन वर्णिता ॥२॥
अस्थूलादेर्निषेध्यस्य गुणसंघस्य संहृतिः ॥ तथा व्यासेन सूत्रेस्मि
न्नुक्ताक्षरधियां त्विति ॥३॥ जें सर्वदा नाहीं स्वभावें - ११ - १५ - यतो वा
इमानि भूतानि जायंते० - तद्विजिज्ञासस्व इति तैत्तिरीयश्रुतिः ॥ स्थि
त्युद्भवप्रलयहेतुरहेतुरस्य यत्स्वप्नजागरसुषुप्तिषु सद्बहिश्च ॥ देहें
द्रियासुहृदयानि चरंति येन संजीवितानि तदवेहि परं नरेंद्र ॥१॥ इति
भागवते ११ स्कंधे ॥ - येथे उठावला सेवाद - १६ - ४२ - जीव ईशो विभि
न्नाचित्तथा जीवेशयोर्भिदा ॥ अविद्या तच्चितोर्भेदः षडस्माकमना
दयः ॥१॥ आरंभवादिनोन्यस्मादन्यस्योत्पत्तिमूचिरे ॥ तंतोः पटस्य
निष्पत्तेर्भिन्नौ तंतुपटौ खलु ॥२॥ अवस्थांतरतापत्तिरेकस्य परि

॥ गामिता ॥ स्या क्षीरं दधि मधु ... सुवर्णं ... कंठे यथा ॥ ३॥

* आद्यावर्तेन्यय भासि वर्तमाने पि तत्तथा ॥१॥ तोव त्सत्यं जगत् भ्रांति दृष्टिका रजतं यथा ॥ यावज्ज्ञानं यतो ज्ञानं चैतस्मान्मास्य गामिता ॥२॥ इ० श्रुतिः ॥

आरंभवादिनः कार्यं मृदो द्वैगुण्यमापतेत् ॥ रूपस्पर्शादयोः प्रोक्ता का

र्यकारणयोः पृथक् ॥४॥ अवस्थांतर भानं तु विवर्त्तो रज्जुसर्पवत् ॥ नि

रंशेप्यस्त्यसौ व्योम्नितलमालिन्यकल्पनात् ॥५॥ ततो निरंशे आनंदे वि

वर्त्तो जगदिष्यतां ॥ मायाशक्तिः कल्पिकास्यादैंद्रजालिकशक्तिवत् ॥६॥

शक्तिः शक्तात्पृथक् नास्ति तद्वत् दृष्टेर्नचाभिदा ॥ प्रतिबंधस्य दृ

ष्टत्वात् छक्त्यभावे तु कस्य सः ॥७॥ शक्तेः कार्यानुमेयत्वाद कार्ये प्र

तिबंधनं ॥ ज्वलतोग्नेरदाहस्यान्मंत्रादि प्रतिबंधता ॥८॥ उपादानं त्रि

धाभिन्नं विवर्त्तपरिणामि च ॥ आरंभकं च तत्रांत्यौ निरंशे नावका

शिनौ ॥९॥ निरूपत्वे नामरूपे द्वे जन्मनाशयुते च ते ॥ बुध्वा ब्रम्हणि

(पंचद०)

वीक्षस्व समुद्रे बुद्बुदा इव ॥१०॥ इति विद्या॰ – नामरूपभेद अनेक –
५२

रक्षको विष्णुरित्यादि ब्रम्हा स्रष्टेत्सु कारणं ॥ संहारे रुद्र इत्येवं सर्वं

मिथ्येति निश्चिनु ॥११॥ नव्यक्तेः पूर्वमस्त्येव न पश्चाच्चापि नाशतः ॥



इति बोधो भवेद्धि या दृश्यते सो विच्यारणात् ॥ ३ ॥ सदा विच्यारयेत्तस्मात् जगज्जीव परात्मनः ॥

नयत्पुरस्तादुत यन्न पश्चान्मध्ये च तन्न व्यपदेशमात्रं ॥ भूतं प्रसिद्धं च

परेण यद्यत्तदेव तत्स्यादिति मे मनीषा ॥१॥ यत्स्तु यस्यादि रंतश्च स वै

मध्यं च तस्य तत् ॥ विकारो व्यवहारार्थो यथा तैजस पार्थिवः ॥२॥ इ०

भागवते ७ स्कंधे ॥ – "सोपाधिक आणि निरुपाधिक अशा प्रकारें विवर्त दोन प्रकारें"

जगद्रूप मृगजळाचें – ६७ – नाप्रतीतिस्तयोर्बाधः किंतु मिथ्यात्व निश्चयः ॥

नो चेत्सुषुप्तिमूर्छासु मुच्येतायत्नतो जनः ॥१॥ संसारः परमार्थोयं सं

लग्नः स्वात्मवस्तुनि ॥ इति भ्रांतिरविद्यास्याद्विद्ययैषा निवर्तते ॥२॥

आत्माभासस्य जीवस्य संसारो नात्मवस्तुनः ॥ जीवभाव जगद्भाव बा

धे स्वात्मैवावशिष्यते ॥४॥ परमात्मावशेषोपि तत्सत्यत्व विनिश्चयः ॥ न

जगद्विस्मृतिर्नो चेज्जीवन्मुक्तिर्न संभवेत् ॥५॥ अनादि सुखरूप

तानि खिल दृश्य निर्मुक्तता निरंतर मनंतता स्फुरणरूपता च स्वता ॥

त्रिकाल परमार्थता त्रिविधभेद शून्यात्मता मम श्रुतिशतार्पिता तद

इ मास्मि पूर्णो हरिः ॥५॥ इ० अ० नवमः सर्गः ॥

श्रीगु०॥ ॐ काजातिरिति॥ चर्मरक्तमांस० इति नि० मूलश्रुतिः॥
येरवाचाळ निरर्थक ३३॥ -कुशला ब्रम्हवार्तायां वृत्तिहीनाः सुरागि
णः॥ तेप्यज्ञानतमा नूनं पुनरायांति यांतिच॥१॥ अनुभूतिं विना
मूढो वृथा ब्रम्हणि मोदते॥ प्रतिबिंबित शारवाग्र फलास्वादन मोदवत॥२॥
अद्वितीयं ब्रम्हतत्वं नजानंति यदातदा॥ भ्रांता एवाखिलास्तेषां क्वमुक्तिः
क्वेहवासुखं॥३॥ अज्ञानोपहतो बाल्ये यौवने वनिताहतः॥ शेषे
कलत्रचिंतार्तः किंकरोतिनराधमः॥४॥ -आत्मनीं जातिसंभेवो ना
नचर्मणो नरक्तस्य नमांसस्य नचास्थिनः॥ प्राणस्य नात्मनो जातिर्व्य
वहारोपि कल्पितः॥१॥ आदौ कृतयुगे वर्णो नृणां हंस इतिस्मृतः॥ कृत
कृत्याः प्रजाजात्या तस्मात्कृतयुगं विदुः॥१॥ इति भागवते, -तथाच म
हाभारते - नविशेषोस्ति वर्णानां सर्वं ब्राम्हमिदं जगत्॥ ब्रम्हणा पूर्वसृष्टं
हि कर्मभिर्वर्णतां गतं॥१॥ कामभोगप्रिया स्तीक्ष्णाः क्रोधनाः प्रियसाह
साः॥ त्यक्तस्वधर्मा रक्तांगास्ते द्विजाः क्षत्रतां गताः॥२॥ गोभ्यो वृत्तिं सं

(margin, vertical:) ॥: माख्थाय पीताः कृष्युपजीविनः॥ स्वधर्मानानुतिष्ठंति ते द्विजा वैश्यतां गताः॥३॥



हिंसानृतप्रिया लुब्धाः सर्वकर्मोपजीविनः॥ कृष्णाः शौचपरिभ्रष्टास्ते
द्विजाः शूद्रतां गताः॥४॥ चातुर्वर्ण्यं मयासृष्टं गुणकर्मविभागशः॥ इ
ति गीतायां॥ -असो ब्राम्हण क्षत्री वैश्य ३३॥ -विप्रक्षत्रियविट्शूद्रा
मुखबाहूरुपादजाः वैराजात्पुरुषाज्जाताय आत्माचारलक्षणाः॥१॥
गुरवो ब्राम्हणा जात्या विधात्रात्रैव निर्मिताः॥ स्वभावेनापरे शिष्याः क्ष
त्रियाद्याश्च वर्णिनः॥२॥ याजनाध्यापनं चैव विशुद्धाच्च प्रतिग्र
हः॥ ब्राम्हणस्यैव कर्मैतत्क्षत्रियस्य न कर्हिचित्॥३॥ अध्याप
नेऽधिकारोस्ति यस्य नैव कथं हि सः॥ उपनेता भवेल्लोके क्षत्रि
(आत्मपुराणे)
योधमवर्णभाक्॥४॥ इति शंकरानंदः॥ उत्तमांगोद्भवाज्ज्यैष्ठ्यात् ब्रम्ह
णश्चैव धारणात्॥ सर्वस्यैवास्य सर्गस्य धर्मतो ब्राम्हणः प्रभुः॥ इति
मनुः॥ जातिर्वैशिष्ट्यम्पि असते॥४०॥ तदुक्तं व[illegible]त्रसूच्युपनि
षदि ब्राम्हणः श्वेतवर्णः क्षत्रियो रक्तवर्णः शूद्रः कृष्णवर्णश्चेत्य द
र्शनाद्वर्णो ब्राम्हणो नभवत्येवेति॥ -ब्रम्हदिनारंभीं च्यैत जाति -४१।
वैश्यः पीतवर्णः॥

श्रृंगी मृग्यां - कौशिकः कुशस्तरणे - गोतमः शशपृष्ठे - वाल्मिको वल्मि
क्यां - व्यासो कैवर्त्त कन्यायां - वसिष्ठो वेश्यायां - विश्वामित्रः क्षत्रियांयां
अगस्त्यः कलशाज्जातः - मांडुको मंडुक्यां - हस्तिन्यां अचर ऋषिः - पारा
शरश्चांडाली गर्भो हन्नः - मातं[illegible]गो मातंगीपुत्रः - शुद्रीगर्भोहन्नो
भारद्वाजः नारदो दासीपुत्र इति श्रुतेः॥ - याची व्यवस्था काव्यांत अस
ऊली पहावी - येथे नाहींच कांहीं कोडें॥ - मनः कृतं कृतं रामन शा
रीर कृतं कृतं॥ येन आलिंगिता कांता तेनैवालिंगिता सुता॥१॥ इति
वासिष्ठे - असो अज्ञानें जें जें झालें - ८८ - मुक्तिस्तु ब्रम्ह तत्वस्य ज्ञा
नादेव न चान्यथा॥ स्वप्रबोधं विना नैव स्वस्वप्नो हीयते यथा॥१॥
आत्यंतिक किंवा विवेक - ९३ - भिद्यते हृदय ग्रंथिश्छिद्यंते सर्व सं
शयाः॥ क्षीयंते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥१॥ इ० श्रुतिः॥
सदद्वैते ऽनृतद्वैते यदन्योन्यैक्यवीक्षणं॥ तस्यांतकालस्तद्भेद बु
(पं-च०)
द्धिरेव न चापरः॥१॥ इति विद्यारण्यः॥ हा ग्रंथि जे धवातुरलां ९३ -
^ बीज भाजलें उगवेना ९४ -



भर्जितानि तु बीजानी संत्यकार्यकराणि च॥ विद्वदिच्छा तथेष्टव्या ऽसत्व बो
धान्न कार्यकृतू॥ इ० पंचदश्यां॥ दुर्वृत्तो वा सुवृत्तो वा मूर्खः पंडित एव वा॥
ज्ञानाभ्यासी नरः पूज्यो किं पुर्ज्ञानवान्नरः॥१॥ झाली पूर्ण कृतकृत्यता ९६
कलिः शयानो भवति संजिहानस्तु द्वापरः॥ उत्तिष्ठस्त्रेता भवति कृतं सं
पद्यते चरन्॥ इति श्रुतिः॥ हे कृतार्थता झाली जेथें ९७॥ - द्विविधश्चित्त
नाशोस्ति सरूपोऽरूप एव च॥ जीवन्मुक्तः सरूपस्याद रूपो देह मुक्ति
गः॥१॥ हें मुमुक्षु साधक चिन्ह ११० - वर्णाश्रम वयोऽवस्थाभिमानो य
स्य जायते॥ तस्यैव च निषेधाश्च विधयः सकला अपि॥१॥ विध्यभावा
न्न बालस्य दृश्यतेति प्रसंजनं॥ स्यात्कुतोऽतिप्रसंगोऽस्य विध्यभावे स
मे सति॥२॥ न वेत्ति किंचिद्बालश्चेत्सर्वं वेत्येति तत्ववित्॥ अल्पज्ञस्यैव
विधयः सर्वे स्युर्नान्ययोर्द्वयोः॥३॥ नैष्क[illegible]र्म्येण न तस्यार्थस्तस्यार्थः स्तु
न कर्मभिः॥ न समाधान जप्याभ्यां यस्य निर्वासनं मनः॥४॥ मनो हि द्वि
विधं प्रोक्तं शुद्धं चाशुद्धमेव च॥ अशुद्धं काम संपर्काच्छुद्धं कामविवर्जि
तं॥

(left margin) ॥ तो॥५॥ ओविपरस्थ्यांचा काम हतस्य तिश्रुतेः॥

पुरे पौरान्पश्यन्नर युवति नामा कृतिमयान् सुवेषान्स्वर्णालंकरण कलितान्

चित्रसदृशान् ॥ स्वयं साक्षी दृष्टेष्वपि च कलयन् तैः सह रमन् मुनिर्नन्या

मोहं भजति गुरुदीक्षा क्षततमाः॥१॥ कदाचित्प्रासादे क्वचिदपि तु सौधेऽच

धवले कदाकाले शैले क्वचिदपि च कूले च सरितां॥ कुटीरे दांतानां मुनि

जनवराणामपि वसन् मुनिर्नन्या मोहं भजति गुरुदीक्षा क्षततमाः॥२॥

मौने मौनी गुणिनि गुणवान् पंडिते पंडितश्च दीने दीनः सुखिनि सुखवान्

भोगिनि प्राप्त भोगः॥ मूर्खे मूर्खो युवतिषु युवा वाग्मिनि प्रौढ वाग्मी धन्यः

कोपि त्रिभुवनजयी योऽवधूते ऽवधूतः ३॥ -अन्हेरितीजेयाबोलाशी ०-

धीरोऽत्यंत दयान्वितोपि सुगुणाचारान्वितो वाथवा नीतिज्ञो विधिवाद

देशिकपरो विद्या विवेकोऽथवा॥ दुष्टानामति पापभावितधियां संगं स

दाचेद्भवेत्तद्बुध्या परिभावितो व्रजति तत्साम्यं क्रमेण स्फुटम्॥१॥

इतिश्री अमृतार्णवस्य दशमः सर्गः॥१०॥ १०॥



श्रीगु०॥ त्वत्संप्रदायानारायण १॥ - आदिनारायणं०॥ दुर्जनम्हणिजे ना

स्तिक १५ - प्रज्ञावतोपि भिषजे यथा लोके मुमुर्षवः॥ मदुक्तं तेन कुर्वंति क

स्य कुर्युरिमेऽधमाः॥१॥ अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः

॥ ज्ञानलव दुर्विदग्धं ब्रम्हापि तं नरं न रंजयति॥२॥ असोहापुरेचि प्रस्ताव,

- ॐ किं कर्मेति॥ इंद्रियैः क्रियमाणं० इ० नि० मू० श्रु०॥ परस्मिन्नर्पितं य

(रामायणे)

त्सुकर्म निर्हरणाय वा॥ कर्तव्य मिति वा कुर्याद्धृ दक्षुध्यास स सात्विकः॥१॥

यत्करोषि यदश्नासि यज्जुहोसि ददासि यत्॥ यत्तपस्यसि कौंतेय तत्कुरु

(गीतायां)

ष्व मदर्पणं॥२॥ - नाममात्रा गुणन करी २९ - सन्निंदाऽसतिनामवैभव०॥१॥

हरि

यास्तव हरिहरांमधी ४५ - अनादिनिधने देवे शंकर [illegible] संस्थिते॥

संसारसागरे मग्नाः भेदं कुर्वंति पापिनः॥१॥ इ० बृहन्नारदीय वचनं॥ अ

थवा कायावाचामनें ७०॥ ब्रम्हार्पणं ब्रम्ह हविर्ब्रम्हाग्नौ ब्रम्हणा हुतं॥ ब्रम्हैवतेन

गंतव्यं ब्रम्हकर्म समाधिना॥१॥ प्रातः स्नानं प्रकुर्वीत प्रथमं देहशुद्धय

वेदनं त्रोदितै मंत्रैर्मृल्लेपन विधानतः॥१॥ संध्यादि कर्म० नित्यं तत्कुर्

ं धौ दिद्धिनाबुधैः॥ ॥ संकल्पमादौ कुर्वीत सिद्ध्यर्थं कर्मणां सुधीः॥ स्वगुरुं पूजयेद्भक्त्या मकुद्ध्या॥

पूजको ममता॥ अमायिकोनुद्धतमामां पूजयेच्च यतव्रतः॥ इ० रामायण॥ इ० अ० एकादशः सर्गः॥

श्रीगु०॥ ॐ किंकर्मेति॥ कर्तृत्वभोक्तृत्वाहंकारतया० ६० नि० मू० श्रु०॥
नित्य नैमित्तिक सम[illegible]स्त - फलाभिसंधिर्भोगार्थी धनकामो यशस्तथा॥
आर्चादौ भेदबुद्ध्या मां पूजयेत् स तु राजसः॥१॥ अ०रा०॥ वेदोक्तमेव कुर्वाणो
निःसंगोर्पितमीश्वरे॥ नैष्कर्म्यं लभते सिद्धिं रोचनार्था फलश्रुतिः॥ त्रैवि
द्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयंते॥ ते पुण्यमासाद्य सुरेंद्र
लोकमश्नंति दिव्यान् दिवि देवभोगान्॥१॥ तं ते भुंक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोके विशंति॥७॥ गीतायां - तंव स जनीं केला प्रश्न॥३५॥
लोके व्यवायामिषमद्यसेवा नित्यास्तु जंतोर्न हि तत्र चोदना॥ व्यवस्थितिस्तत्र
विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा॥१॥ ६० भागवते॥ तथा च मनुस्मृत्यां
नु०॥ न मांसभक्षणे दोषो न मद्ये न च मैथुने॥ प्रवृत्तिरेषा भूतानां निवृत्ति
स्तु महाफला॥१॥ यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत्॥ तस्य व्यपैति
ब्राह्मण्यं शूद्रत्वं चाधिगच्छति॥२॥ सुरा वै मलमन्नानां पाप्मा च मलमु
च्यते॥ तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्॥३॥ यद्घ्राणभ॰:

घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा॥ एवं व्यवायः प्रजया न रत्या इमं विशुद्धं न विदुः स्वधर्मं॥११॥ (भागवत)



आरंभीं ज्यां[illegible]च्या मध्ये वर्ण असे मद्यमांसादिक पदार्थ ते॥ - तव पुसते झालेसंत
एकादशीचा निर्णय अर्थांत आहे परंतु त्याबदल उपपत्ती कांहीं दिली नाहीं ती येणे प्र
एकादशी पहिलीच सत्य, दुसरी मानिली तरी पहिलीच खरी, याविषयीं हे
ग्रहणपर्व आणि त्यास लागून असणारा त्यापूर्वी वेध यांमध्यें जसें अन्न
भक्षण होऊं नये तसेंच दशमीनें विद्ध असलेल्या एकादशींत भोजन होऊं
नये - ग्रहण सुटून शुद्ध मंडळ ज्यानें पाहिलें त्यानें भोजन करावें शुद्ध मंडळ
ळाविषयीं ज्यास संशय त्यानें मात्र भोजन करूं नये म्हणजे वेध व ग्रहण
यांतील उपोषण त्यानें पाळून शुद्ध मंडळ न दिसल्या प्रीत्यर्थ किंवा संश
य असल्या कारणानें त्यानें दुसरें हि उपोषण पाळावें - तसी भागवतांनीं
पहिली एकादशी पाळून दुसरे दिवशीं एकादशी असेल असा संदेह अ
सतां दुसरें हि उपोषण पाळावें - सारांश वैष्णवांनीं विद्ध व शुद्ध दोनही उ
पोषणें पाळावीं - स्मार्तांनीं एकच उपोषण पाळणें पुरे आहे - कारण त्यां
स संशय नाहीं॥ अति शिपातलीया परि॥९४॥ -

ज्वलितोऽग्निर्यथा वन्हेर्भवेच्छांतिर्जलैः सदा॥ अर्घ्यपाद्यादिभिस्तद्वदति
थेः शांतिरीरिता॥१॥ शांतिभून्यो यथा वन्हिरुदकैः सपरिच्छदान्॥
गृहान् दहति तद्वत्स्यादतिथिः सर्वदाहकः॥२॥ अग्निष्टोमादिको याग
इष्टमित्युच्यते बुधैः॥ कूपारामतटाकादि पूर्तमुक्तं मनीषिभिः॥३॥ औ
रसास्तनयास्तद्वत् सर्वलक्षणसंयुताः॥ गवाद्याः पशवस्तद्वद्बहुमूल्या
मनेकशः॥४॥ एतत्सर्वं दहत्येव पुरुषस्याल्पचेतसः॥ यस्यानश्नन्वसेद्य
त्र ब्राम्हणस्त्वतिथिर्गृहे॥५॥ इ० यमोक्तिः॥ ऐशी भक्ति जो कोण करी १२२॥
यस्तु भेदं प्रकुरुते स्वात्मनश्च परस्य च॥ भिन्नदृष्टेर्भयं मृत्युस्तस्य कुर्या
न्न संशयः॥१॥ विज्ञानभक्तिः परमा पवित्रा न यत्र भेदोऽवसरः कथं
चित्॥ इतोऽन्यथा भक्तिनिरूपणं यत्सा कर्मभक्तिः खलु भेदभानात्॥२॥
इ०अ० द्वादशः सर्गः समा०

सर्ग१३॥ श्रीगुणांकितपद इति॥ ब्रम्हसत्यं जग० इ० नि० मू० श्रु०॥ मद्गुणः श्रव
णादेव मय्यनंतगुणालये॥ अविच्छिन्ना मनोवृत्तिर्यथा गंगांबुनोंऽबुधौ॥
तदेव भक्तियोगस्य लक्षणं निर्गुणस्य हि॥१॥



सत्य एकश्चिपर ब्रम्ह॥१॥ - अस्ति ब्रम्हेति चेद्वेद परोक्षज्ञानमेव तत्॥ अहं ब्रम्हेति
चेद्वेद साक्षात्कारः स उच्यते॥१॥ नामरूपोद्भवस्यैव सृष्टित्वात्सृष्टितः पुरा॥
नामरूपे न तस्यां तो नयोरप्यनुद्भवात्॥२॥ तपः प्रधानं लोकेऽस्मिन्न
किंचित्तपसः परं॥ साधनं परलोकाय तपः कार्यं मुमुक्षुणा॥१॥ सत्यं ज्ञान
मनंतं ब्रम्हेत्यादि श्रुतयो दृष्टव्या॥ - शिवयजावा शिवपणें॥५- शिवो भूत्वा
इति श्रुतिवचनं॥ - कर्तापि सर्वलोकानामक्षय्यैश्वर्यवानपि॥ शिवः शिवो
ऽहमस्मीति वादिनं यं च कंचन॥ आत्मना सह तादात्म्यभागिनं कुरुते भृ
शं॥१॥ इ० शिवगीता॥ पुत्रदाराधनादीनां नाशे तात्कालिकी मतिः॥ धि
क्संसारमिति दृक्स्याद्विरक्तेर्मंदता हि सा॥१॥ अस्मिन्जन्मनि माभूवन्
पुत्रदारादयो मम॥ इति याऽस्ति स्थिरा बुद्धिः सा वैराग्यस्य तीव्रता॥२॥
पुनरावृत्तिसहितो लोको मे मास्तु कश्चन॥ इति तीव्रतरत्वं स्यान्मंदे न्यासो
न कश्चन॥३॥ इ० वासिष्ठे॥ - म्हणजे वैराग्यैकमूर्ति॥२७॥ दोषदृष्टिर्जिहा
सा च पुनर्भोगेष्वदीनता॥ असाधारणहेत्वाद्या वैराग्यस्य त्रयोऽप्यमी॥१॥

वैराग्यबोधोपरमाः सहायास्ते परस्परं॥ प्रायेण सह वर्तंते वियुज्यंते क्वचित्

क्वचित्॥१॥ तथाच मुक्तिकोपनिषदि – वासनाक्षयविज्ञानमनोनाश

महामते॥ समकालं चिराभ्यस्ता भवंति फलदा मताः॥१॥ त्रयमेव समं याव

न्नाभ्यस्तं च पुनःपुनः॥ तावन्नपदसंप्राप्तिर्भवत्यपि समाशतैः॥२॥ एकै

कशो निषेव्यंते यद्येते चिरमप्यलं॥ तन्न सिद्धिं प्रयच्छंति मंत्राः संकीर्णि

ता इव॥३॥ तस्मात्सोम्य प्रयत्नेन पौरुषेण विवेकिना॥ भोगेच्छां दूरत

स्त्यक्त्वा त्रयमेवं समाश्रय॥४॥ तथाच भागवते – भक्तिः परेशानुभवो विर

क्तिरन्यत्र चैष त्रिक एककालः॥ प्रपद्यमानस्य यथाश्नतः स्युस्तुष्टिः

पुष्टिः क्षुदपायोऽनुघासं॥१॥ तथापि – वैराग्योपरती पूर्णे बोधस्तु प्रति

बध्यते॥ यस्य तस्य न मोक्षोऽस्ति पुण्यलोकस्तपोबलात्॥१॥ पूर्णे बोधे तद

न्यौ द्वौ प्रतिबद्धौ यदा तदा॥ मोक्षो विनिश्चितः किंतु दृष्टं दुःखं न नश्यति॥२॥

(पंच०)
३०विचार०॥ ब्रह्मलोकतृणीकारो वैराग्यस्यावधिर्मतः॥ ... त्रयोप्यनंतपक्षाश्चेन्महतस्तपसः फलं॥ दुरितेन क्वचि

त्किंचित्कदाचित्प्रतिबध्यते॥३॥ अप्रवेश्य चिदात्मानं पृथक् पश्यन् इ

(vertical note in left margin: ॥ इति ॥ ... कोटि वस्तूनि नवाधाय ... ॥२॥ ३०विचार०॥ (पंचदशी))



– विषय मात्रां माजीपूर्ण २७ – जन्मकोट्यर्जितं पूर्वं पुण्यं पापं शुभाशुभं॥ स्मर

न्निंदति दुःखार्त्तमात्मानं क्लेशभाजनं॥१॥ नानायोनिसहस्राणि पूर्वं प्राप्तान्यने

कधा॥ सुखदुःखकराण्यत्र संसारे दुःखसागरे॥२॥ श्वसूकरखरोष्ट्राणां गो

ऽजाविमृगपक्षिणां॥ गोधानामपि सर्पाणां कीटादीनां शरीरिणां॥३॥ ग्राह्यं त्या

ज्यं जन्मान्यं देहं दैवेन चोदितं॥ नरके भुवि वा स्वर्गे बंभ्रमीमि यथा तृणं॥४॥

कर्मपाशैर्दृढैर्बद्धो मायासूत्रविनिर्मितैः॥ पुत्रदारादिकार्येषु प्रभुरत्र नियो

जितः॥५॥ अप्रशस्तानि नारीणां पूयानीवस्त्रनागतः॥ निर्गतान्यपि पीता

नि कष्टं दुःखकराणि भोः॥६॥ आहारविविधा भुक्ताः स्थिरजंगमदेहजाः॥

बिभत्सजनकानित्यं ये देहांतरसंश्रयात्॥७॥ जातोऽहं च मृतोऽहं च देहे स

र्वत्र सर्वदा॥ माता पिता सुता दारा बांधवा द्रविणादिकं॥८॥ देहे तिरन्यं त

ज्जातमंतेपि विगतं तथा॥९॥ यावंतः पांसवो भूमौ यावंत्यो दिवि तारकाः॥

तावन्मं मात्र देहेन सह पित्रादिचाभवत्॥१०॥ जात एव जनिस्तद्वन्मृत

स्य मरणं पुनः॥ मम न्याय विरुद्धं तु चित्र मासीत्सहस्रधा॥११॥

जातो बालो युवा वृद्धो मृतो जात इतीदृशं ॥ चक्रं मन्मस्त्के नित्यं दुःखदं परिव

र्तते ॥७१॥ दुःखोदधिरयं तेन संसारो मे प्रतीयते ॥ अहो दुःखोदधौ मग्नो न प

श्यामि प्रतिक्रियां ॥७२॥ परं पारं यतो यामि ह्यस्य दुःखोदधेरयं ॥७७॥ जितं

द्यूतं मया पूर्वं त्रैवर्णिकवपुर्ग्रहात् ॥ पराजितं तदेवाद्य कौशलेन प्रमादि

नां ॥७३॥ इतः परं तथा नाहं करिष्यामि कथंचन ॥ यदि योन्याः प्रमुक्तोहमि

दानीं पुण्यलेशतः ॥७४॥ तथा ब्रह्मात्म विज्ञानं सर्वदुःखविनाशनं ॥ अष्टां

गयोगतः स्वस्य करिष्याम्येव शीघ्रतः ॥७५॥ अथवा पार्वतीनाथं जटिलं धू

लिधूसरं ॥ शंकरं वा मुकुंदं वा प्रपत्स्येहं श्रियः प्रियं ॥७६॥ मयायत्स्वजन

स्या र्थे कृतं कर्म शुभाशुभं ॥ एकाकिनं परित्यज्य मां कृतघ्ना गता इतो॥

७७॥ मत्प्रसादादवाप्तं यैः सुखं लोकद्वयेपि च ॥ विष्टावत्ते श्मशाने मां प

रित्यज्य गृहं गताः ॥७८॥ मम येकुर्वते नित्यं पादयोः शिरसा नतिं ॥ मत्स्प

र्शनात्कृतं स्नानं शुद्ध्यर्थं तैर्दुरात्मभिः ॥७९॥ मम ये कृतवंतस्तु पूर्वं चंदन

लेपनं ॥ अग्नौ ते क्षिप्तवंतो मां निर्घृणाः शूकहस्तकाः ॥८०॥



॥ ध्यानंतरं सुखं ॥ अभयं हि विजानीयान्मत्तो ध्यं हि न ता विनत् ॥२॥

न पिता नापि माता वा न दारा न सुता अपि ॥ मया सह समायाताः कस्मिन्नप्य

त्र जन्मनि ॥२१॥ अर्थहस्त्रं यथा वेश्या अस्निग्धाः स्निग्धवत्स्थिता ॥ वि

मोहयंति तद्वन्मां बांधवाः पापकारणं ॥२२॥ विमोह्य गणिकातुल्या मरणे

व्यसने सति ॥ परित्यज्य गता दुःखमहमेकः समाप्तवान् ॥२३॥ अनेन वपु

षा कुर्यात्प्रणवादेरुपासनं ॥ निर्गुणं च तथा ब्रह्म जानीयाच्चेत्सुधीः पुमान् ॥२४

हे श्लोक आत्मपुराणांतले आहेत, शंकरानंदकृत ॥ राहो राहो चिच्चमत्कार ४३

एतस्मात्किमिवेंद्रजालमपरं यद्गर्भवासस्थितं रेतश्चेतति हस्तमस्तक

पद प्रोद्भूत नानांकुरं ॥ पर्यायेण शिशुत्वयौवनजरारोगैरनेकैर्वृतं प

श्यत्यत्ति शृणोति जिघ्रति यथा गच्छत्यथाऽऽगच्छति ॥१॥ निरूपयितु

मारब्धे निखिलैरपि पंडितैः ॥ अज्ञानं पुरतस्तेषां भाति कक्षासु कासु

चित् ॥२॥ न जानामि किमप्येतदित्यं ते शरणं तव ॥७॥ आदि अंती दुः

ख देहाशी-५॥ सुखमध्ये स्थितं दुःखं दुःखमध्ये स्थितं सुखं ॥ द्वयम

न्योन्य संयुक्तं प्रोच्यते जल पंकवत् ॥१॥ यद्वा सुखस्यानंतरं दुःखं दुःख

तेव्हां कोणीच नये संगें ५५ - यानानिभृमौ पशवश्च गोष्ठे भार्या गृहद्वारि जन

श्मशाने ॥ देहश्चितायां परलोकमार्गे कर्मानुगो गच्छति जीव एकः॥१॥

जे जे दिसताति जडार्थ॥५६॥ सत्ताचित्तिः सुखं चेति स्वभावा ब्रम्हणस्त्र

यः॥ मृच्छिलादिषु सत्तैव व्यज्यते नेतरद्वयं॥१॥ सत्ताचि[illegible] ति द्वयं

व्यक्तं धीवृत्त्योर्घोरमूढयोः॥ शांतवृत्तौ त्रयं व्यक्तं मिश्रं ब्रम्हेत्थमीरि

तं॥२॥ शिलादौ नामरूपे द्वे त्यक्त्वा सन्मात्रचिंतनं॥ त्यक्त्वा दुःखं घोरमू

ढधियोः सच्चिद्द्विचिंतनं॥३॥ शांतासु सच्चिदानंदांस्त्रीनप्येवं विचिं

तयेत्॥ कनिष्ठ मध्यमोत्कृष्टास्तिस्त्रः चिंता क्रमादिमाः॥४॥ औदासि

न्येतु धीवृत्तेः शैथिल्यादुत्तमोत्तमं॥ चिंतनं वासनानंदे ध्यानमुक्तं

चतुर्विधं॥५॥ शास्त्र खोंची दिसे शरीरीं॥५७॥ यस्मिन्यस्मिन्यस्मि

न्लोके बोधस्तत्तदुपेक्षणे॥ यद्बोधमात्रं तद्ब्रम्हेत्येवं धीब्रम्ह निश्चयः॥१॥

तथाच॥ अभान स्थूलदेहस्य ०॥१॥ लिंगाभाने सुषु० २॥ सुषुप्त्यभा

ने भा० ३



ःः पैंजणे तीला वर्तीते परमपदें ॥१॥

पतिर्जाया पुत्र वित्ते पशु ब्राम्हणबाहुजाः॥ लोका देवा वेदभूते सर्वे चात्मा

र्थतः प्रियाः॥४॥ सुखे वैषयिके प्रीति मात्रमात्मा त्वतिप्रियः॥ सुखव्यभि

चरत्येषा नात्मनि व्यभिचारिणि॥५॥ वित्तात्पुत्रः प्रियः पुत्रात्पिंडः पिं

डात्तथेंद्रियं॥ इंद्रियाच्च परप्राणः प्राणादात्मा परः प्रियः॥६॥ नाना

योनि सहस्राणि पूर्वं प्राप्तान्यनेकधा॥ सुखदुःखकराण्यत्र संसारे दुःख

सागरे॥१॥ - स्वयें आत्मा हा (य)जमान १९॥ श्रु० तस्यैवं विदुषो० - व्या

हृतिराहुतिरित्यादि॥ - आरब्धकर्मनानात्वाद्बुद्धानामन्यथान्यथा

॥ वर्तनं तेन शास्त्रार्थे भ्रमितव्यं न पंडितैः॥१॥ शापानुग्रह सामर्थ्यं य

स्यासौ तत्त्वविद्यदि॥ तन्न शापादि सामर्थ्ये फलं स्यात्तपसो यतः॥२॥ ज्ञा

नोत्तरींचिया पुण्याशी॥१५०॥ तदुक्तं मनुना षष्ठाध्याये - प्रियेषु स्वेषु

सुकृतमप्रियेषु च दुष्कृतम्॥ विसृज्य ध्यानयोगेन ब्रम्हाभ्येति सना

तनम्॥७९॥ एते ब्रम्हात्म विज्ञानाद्ब्रम्हीभूता यतीश्वराः॥ पुण्यपा

एतेषु येत्र संप्रीताः पुरुषा भक्ति संयुताः॥ तेभ्यः स्व सुकृतं सर्वं प्रयच्छंति
सुखप्रदं॥१॥ य एतेषु सदा द्वेषं दुरात्मानः प्रकुर्वते॥ तेभ्यस्ते पातकं सर्वं प्र
यच्छंत्यत्र दुःखदं॥२॥ इ० शंकरानंदै रुक्तं॥ - ज्ञानवंतं द्विजं यस्तु द्विष्य
ते च नराधमः॥ स शुष्यमाणो म्रियते यस्मादीश्वर एव सः॥१॥ इ० शिवगी०
त्याचा भेद चि तो सरला १५८॥ दोष बुध्या गुणातीतो निषेधान्न निवर्तते
॥ गुणबुध्या च विहितं न करोति यथार्भकः॥१॥ अहो काय पुण्य केलें॥
लोक वेद निषिद्धेन दुष्करेणापि कर्मणा॥ पितृमातृ वधेनापि सुवर्णस्ते
यतो पि वा॥१॥ श्रोत्रियस्य द्विजेंद्रस्य गुणोदधि समस्य वा॥ पूर्णं देहस्य
गर्भस्य राज्यार्थं हस्य धीमतः॥२॥ स्वकीयस्य च वा तस्मात् दुष्करेण
वधेन वा॥७॥ विप्रस्य वा त्रिवर्णस्य सुरापानो त्थितेन वा॥ निजां वा
जननीं कामाद्ग्राम्य धर्म समागमात्॥१॥ एवमन्यैर्महाक्रूरैः पातकै
श्चोपपातकैः॥ संकरीकरणाद्यैश्च लोकद्वय विनिंदितैः॥२॥ अपि वाप्या
त्म विज्ञान संपन्नस्य महात्मनः॥ पापेच्छोरपि नापैति मुखकांतिः कदाच
न॥२॥



शंकरानंदः - आत्मानं चे द्विजानीयादयमस्मीति पूरुषः॥ किमिच्छन् कस्य
कामाय शरीरमनुसंज्वरेत्॥ इति श्रुतिः॥ अहं ब्रम्हेति विज्ञाना दानंदात्म
स्वरूपिणं॥ एतं हि तपतो नैते नित्यं सुकृत दुष्कृते॥ अकृते च कृते चापि
यथान्यं भेद दर्शिनं॥१॥ कृतवान् पातकं कस्मात्पुण्यं चाहं कृतो न हि॥
इति यद्धख सदादीनं सर्व शक्ति विनर्जितं॥२॥ आनंदात्मनि विज्ञाते पुण्यपा
पे उभे अपि॥ असावात्मतया जानन् कथं तापं ततो व्रजेत्॥३॥ शंकरानंदः

इति अमृतार्णवस्य त्रयोदशः सर्गः॥

सर्ग१४॥ श्रीगु०॥ ॐ किमासुरमिति॥ अत्सुरागद्वे० इ० नि० मू० श्रु०॥ परीहोतां तव ता
पात्यंत॥४२॥ - तएनं भर्त्सयित्वा राजा गत्य पुरतो भयाः॥ धिक्त्वां मनुष्य देहस्थं
पापिनं स्वात्मघातकं॥१॥ अयं शत्रुरिदं मित्रमुदासीनस्त्वयं मम॥ इत्यादि बुद्धि
मोहेन भवतावंचितो भवान्॥२॥ शत्रुस्त्वमेव भवतो नान्यः कोपि हि विद्यते॥
येन त्वयानैव कृतमात्मनो बंध मोचनं॥३॥ आत्मानः प्रतिकूलं यः कर्मणा
मनसा गिरा॥ परस्य कुरुते स्वस्य सोऽस्य शत्रुरितीरितः॥४॥

जीवतो बलिनो भीतिः परपीडाकरस्य हि ॥ जंतोर्मृतस्य चास्मत्तः कस्तां कु

र्वीत बुद्धिमान् ॥ ५ ॥ इमं देहं समाश्रित्य भवता दुष्कृतं कृतं ॥ एत[illegible] दुःखा

न्यनंतानि प्राप्स्यंति त्वामहर्निशं ॥ ६ ॥ देहोपभोगसिद्ध्यर्थं पुत्रदारधना

दिकं ॥ आश्रित्य भवता किंचिन्न कृतं सुकृतं बत ॥ ७ ॥ अपि क्लेशो हि भव

ति सुकृतस्य समर्जने ॥ स्वल्पः सोपि न चास्ति परमात्मविचिंतने ॥ ८ ॥

अपि चेन्निर्गुणं ब्रम्ह ज्ञातुं नैव भवान् क्षमः ॥ कस्मादुपासनं तस्य न कृतं

सुखदं त्वया ॥ ९ ॥ परदोषास्त्वया यद्वत्सावधानेन निश्चिताः ॥ सर्वदैव

तथात्मा किं क्षणमात्रं न निश्चितः ॥ १० ॥ यथा परविनाशार्थमुद्यमो भवता

कृतः ॥ तथा स्वल्पोपि कस्मान्न स्वर्गमोक्षकृते कृतः ॥ ११ ॥ आदित्यचंद्राव

निलोनलश्च द्यौर्भूमिरापो हृदयं यमश्च ॥ अहश्च रात्रिश्च उभे च संध्ये ध

र्मश्च जानाति नरस्य वृत्तं ॥ १२ ॥ मत्तो न बलवान् कश्चिल्लोकेऽस्मिन्विद्य

ते पुमान् ॥ एवं प्रवृत्तं को वा मां शिक्षयेदिति दुर्धिया ॥ १३ ॥ विचार्य बहुशो

दर्पात्प्रवृत्तः पापकर्मणि ॥ भवानुल्लंघितमर्यादो लोकशोककरः सदा ॥ १४ ॥

तस्य ते दुर्धियो नित्यं लोकोपद्रवकारिणः ॥ [illegible] तारो वयं प्राप्तास्त्वत्तोपि बलवत्त

माः ॥ १५ ॥



त्वत्कृतं सकलं विद्मो दुष्कृतं यमकिंकराः ॥ वासरादिभिरत्यर्थमावितं य

मसंसदि ॥ १६ ॥ इत्यादिवचनान्युक्त्वा बद्ध्वा पाशैः सुदारुणैः ॥ कशादिभि

श्च संताड्य नयंति यमकिंकराः ॥ १७ ॥ बांधवेषु भृशं शाद्वान्मुंचत्सु यमकिं

कराः ॥ नयं[illegible]येनं यथा राजभृत्या जातापराधकं ॥ १८ ॥ इ० आत्मपुराणे शंकरा०

स्नातं तेन समस्ततीर्थसलिले सर्वापि दत्ता[illegible]वनिर्यज्ञानां च कृतं सहस्त्रम

[illegible]खिलं देवाश्च संपूजिताः ॥ संसारा[illegible]श्च समुद्धिताः स्वपितरस्त्रैलोक्य

पूज्योप्यसौ यस्य ब्रम्हविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥ १ ॥ इ०

वासिष्ठे – तथा च श्रुतिः ॥ क्षणमेकं क्रतुशतस्येति – ऋणशीणक्षुधाशांत्य

र्थे ६२ – भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥ तस्मात्सर्वप्रयत्नेन ऋ

णं कृत्वा घृतं पिबेत् ॥ १ ॥ इ० नास्तिकशास्त्रे – पूर्वजन्मकीं पुनर्जन्म ॥ ६३ –

पूर्वजन्मन्यसन्नेतज्जन्म संपादयेत्कथं ॥ भाविजन्मन्यस्तत्कर्म न भुंजीते

हसंचितं ॥ १ ॥ पंचदश्यां – अत्र कैवल्यश्रु० ॥ सुषुप्तकाले सकले विलीने०

– स एव जीवः स्वपिति प्रबुद्धः ॥ १ ॥ इ० अम्० चतुर्दशः सर्गः ॥ ६ ॥

*: सर्वसिद्धाच गुरुसेवापरा उ:मुमुक्षवः॥१॥

श्रीगु०॥ ॐ किं ज्ञानमिति॥ एकादशेंद्रियग्रहणे सद्गु० र० नि० मू० श्रुतिः॥
श्रोत्रादि पांच ज्ञानेंद्रियें॥ - अनुवर्तेत मनसा वाचा कायेन सादरं॥ गुरुं द
ष्ट्वा समुत्तिष्ठेन्नमस्कृत्वा कृतांजलिः॥१॥ कृमिविट्घर्मनिष्ठं तं दुर्गंधं म
लमूत्रकं॥ श्लेष्मरक्तात्मकं देहं वंचयेन्नवराननं॥२॥ आचार्यं सत्संप
न्नं साक्षात्कारुणिकोत्तमं॥ अभिगम्य महात्मानं प्रणम्य सुविद्वद्वत्॥३॥
तस्य पादांबुजं मूर्ध्नि निधाय परयोगिनः॥ अधीहि भगवन् ब्रह्मेत्येवं
विज्ञापयेत्सुधीः॥४॥ हस्ते गृहीत्वा सन्निधाय यथागर्भोत्तमः पुमान्॥ त्रै
वर्णिको वदत्येत्य शिष्यो हं शाधि मां प्रति॥५॥ आचार्याय महात्मन्या
स्वदेहस्य निवेदनं॥ निवेदनं तथान्यस्मै ज्ञानानुत्पत्तिकारणं॥६॥ न गुरो
रधिकं तत्त्वं न गुरोरधिकं तपः॥ गुरोः सेवासमं किंचिन्नास्ति नास्ति वरान
ने॥७॥ आचार्येऽनीश्वरज्ञानमुपेक्षा च तथैव च॥ तदुक्तिविस्मृतिश्चै
व ज्ञानानुत्पत्तिकारणं॥८॥ न मुक्ता देवगंधर्वाः पितरो यक्षचारणाः॥ ऋषयः

ज्ञानं विज्ञानानैव मुक्तिः स्यात् ज्ञानं गुरुभक्तितः॥ गुरोः समानता नास्ति तस्मा
त्पूज्यो गुरुः सदा॥१०॥ यो विजानाति वेदांतैः स्वानुभूत्या च निश्चितं॥ साक्षा
त्स्वीयमात्मरूपं स एव गुरुसत्तमः॥११॥ प्राकृतैः संस्कृतैश्चापि दृष्टांतैर्विवि
धैरपि॥ भिनत्ति हृदयग्रंथिं बोधकृत्स गुरुः स्मृतः॥१२॥ तस्य प्रसादयुक्त
स्य विद्या वेदांतवाक्यजा॥ दहत्यविद्यामखिलं तमः सूर्योदयो यथा॥१३॥
गुरवो बहवः संति शिष्यवित्तापहारकाः॥ दुर्लभोऽयं गुरुर्देवि शिष्यहृत्ताप
हारकः॥१४॥ गुरुं हुंकृत्य हुंकृत्य गुरुनिंदां करोति यः॥ स याति नरके घोरे
यावच्चंद्रदिवाकरौ॥१५॥ गुरुत्यागाद्भवेन्मृत्युर्विद्यात्यागाद्दरिद्रता॥

(इति गुरुगीतायां)

॥ तस्माद्विद्यागुरुत्यागी रौरवं नरकं व्रजेत्॥१६॥ मूर्खपणे किंवा कळून॥१९
- इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते॥ एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति
तद्विदः॥१॥ अन्यक्षेत्रे कृतं पापं०॥२॥ बुद्धिपूर्वक जेनापि ती ४२॥ - अ

(भगवद्गीता)

ज्ञानेनावृतं ज्ञानं तेन मुह्यंति जंतवः॥ इति॥ नाहीं श्रीसद्गुरूची प्राप्ति

मणिप्रदीपप्रभयोर्मणिबुध्याभिधावतोः॥ मिथ्याज्ञानं विशेषेपि विशेषो र्थक्रियां प्रति ॥१॥ दूरेप्रभाद्वयं दृष्ट्वा मणिबुध्याभिधावतोः॥ प्रभायां मणिबुद्धिस्तु मिथ्याज्ञानं द्वयोरपि॥२॥ नलभ्यते मणिर्दीपप्रभां प्रत्यभिधावतः॥ प्रभायां धावताऽवश्यं लभ्यतैव मणिर्मणेः॥३॥ असो मंदाऽपायनसे

इति (पंचदश्यां)

॥ ७६ ॥

-आर्चायामेव हरये पूजां यः श्रद्धये हते॥ न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः॥१॥ - पापपुण्य समताघडे॥ ८४॥ नरपशुविहंगतिर्यग्योनीनां चतुरशीतिलक्ष्याणि॥ कर्मनिबद्धो जीवः परिभ्रमन्यातनां भुंक्ते॥१॥ -चरमस्त्वत्र नरदेहस्तथाग्रजन्मान्वयेषु चोत्पत्तिः॥ ७७॥ आचार्यः॥ - एक द्वित्रिश्च तुष्पादो बहुपादस्तथापदः॥ बव्ह्यः संति पुरः सृष्टास्तासां मे पौरुषि प्रिया॥१॥ सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या॥२॥ -नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारं॥३॥ - पहा पहा सकल सृष्टी॥ ९३॥ मनुष्याणां

(इति भागवते)

सहस्रेषु कश्चिद्यतति सिद्धये॥ य ततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः॥१॥ ऐसा पुरुष जो निर्धारी १०३॥ यस्य देवे परा भक्तिर्यथा देवे त

(इति भगवद्गीता)



यस्त्वविज्ञानवान् भवत्ययुक्तमनसा यदा॥ तस्येंद्रियाण्यवश्यानि दुष्टाश्वाइव सारथेः॥२॥ इति शिवगी० - ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च॥ प्रेममैत्री ॥१॥ सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः॥ भूतानि भगवत्यात्मन्येष भागवतोत्तमः॥२

(भाग०)

यद्वा॥ मद्गुणश्रवणादेव मय्यनंतगुणालये॥ अविच्छिना मनोवृत्तिर्यथा गंगांबुनोंबुधौ॥ तदेव भक्तियोगस्य लक्षणं निर्गुणस्य हि॥१॥ म्हणोनि यां ब्रम्हविद्येच्या ९२॥

(रामायण)

याविषयीं ब्रम्हविद्या व ब्रम्हनिष्ठ यांचा उदाहरणार्थ संवाद - ब्रम्हविद्याऽति संखिन्ना ब्रम्हिष्टं ब्राम्हणं ययौ॥ वारांगनासमानां हि मा कुथाः सर्व सेवितां॥१॥ गोपाय मां स दैव त्वं कुलजामिव योषितां॥ शेवधिस्त्व क्षयस्ते ह मिह लोके परत्र च॥२॥ अथैवं चेदशक्तोसि कर्तुं मद्वचनं द्विज॥ जनोपकारनिरतो वदान्योऽतिकृपावृतः॥३॥ तथापि गुणहीनाय न मां दद्याः कथंचन॥ स्वसुतामिव रूपाढ्यां पुरुषे विगतस्पृहे॥४॥ एतेऽगुणा मम सदा ब्रम्हन्नत्यंत दुःखदाः॥ निंदा गुणवतां तद्वत्सर्वदार्जवशून्यता॥५॥ इंद्रियाधीनता नित्यं स्त्रीसंगोप्यविनीतता॥ कर्मणा मनसा वाचा गुरौ भक्तिविवर्जनं॥६॥ एवमाद्या हि येषां स्युस्तेभ्यो वर्ज्य मां सदा॥ एवं हि कुर्वतो नित्यं कामधेनुरिवास्मि ते॥७॥

(आत्मपु०)

वंध्याऽन्यथाभविष्याम्लतेव फलवर्जिता॥७॥ अपिन्यायंवदाम्यत्रनो
पकारायतेद्विज॥ योनाशयेद्धि दुर्भेद्य मादित्याद्यैरपीश्वरैः॥८॥ तमस्तो
मं हृदिस्वस्य सत्यादेवात्मबोधनात्॥ ब्रम्हत्वंभवसीत्यादि पाययेच्च
वचोमृतं॥९॥ कर्णाविदुःखभाजौच्कुर्वन्नाबोधनंसदा॥ सएवास्यपिता
तद्वन्मातान्चात्रनन्चापरौ॥१०॥ यतोऽस्यसंततौपाता सर्वदुःखं विनश्य
ति॥११॥ अन्ययोःसंततौपित्रौ दुःखंपुत्रस्यजायते॥ यस्यनैव प्रतीकारो
ऽस्याःसंततेःपरः॥१२॥ ततोब्रम्हात्मबोधस्यदात्रेपित्रेसदैवहि॥ नद्रुह्ये
द्गुरवेतस्मैकर्मणामनसागिरा॥१२॥ एतन्मयात्रकथितं ब्रम्हविद्याप्रदे
गुरौ॥ वेदःसर्वार्थशिक्षासुगुरवेतद्धिमन्यते॥१३॥ अध्यापिताहियेशि
ष्यामन्यंतेते गुरुंस्वकं॥ गुरौयथैते वर्तंते तथाविद्यापितेष्विह॥१४॥ गु
रुभक्तस्ततोयःस्याद्विद्यायाःश्रवणे तथा॥ आदृतस्त्वप्रमादीचमेधावी
स्त्रीविवर्जितः॥१५॥ ब्रूयास्त्वंयदितेवक्तुमिच्छास्याद्द्विजसत्तम॥ ब्रम्ह
विद्यामिमांतस्मैरक्षकोयदिमेभवेत्॥१६॥ इ० आत्मपुराणे शंकरानंदः॥



॥ नमो धर्माय॥ ५॥ (जन्मधर्मेण धर्मेण उभेन सत्यानृतेन यत्र (कायेन वाचा मनसा) ... त्यजता॥ ५॥

श्रवणे अर्थआलामना१५९ - इत्थंवाक्यैस्तदर्थानुसंधानंश्रवणंभवेत्॥ यु
स्त्या संभावितत्वानुसंधानंमननंतुयत्॥१॥ ताभ्यांनिर्विचिकित्सेऽर्थेचेतसः स्था
पितस्यतत्॥ एकतानत्वमेतद्धी निदिध्यासनमुच्यते॥२॥ चित्तस्यासंभव

(पंच०)

नाशो मननेनभविष्यति॥ विपरीताभावनेयंनिदिध्यासाद्विनश्यति॥३॥ कर्म
ज्ञात्व्याचित्तशोधन१७०॥ उपास्तयोत एवात्र ब्रम्हशास्त्रेविचिंतिताः॥ प्रा
गनभ्यासिनःपश्चाद्ब्रम्हाभ्यासेनतद्भवेत्॥१॥ यद्यथावर्तते तस्यतत्त्वंहि

(पंच०)

त्वाऽन्यथात्वधीः॥ विपरीताभावनास्यात्पित्रादावरिधीर्यथा॥२॥ असो
श्रवणादित्रयाने१८३॥ श्रवणादित्रयंतद्वत्तत्वमिथ्याविवेचनं॥ पुनर्ग्रंथै
रनुदयोबोधस्यैतेत्रयोमताः॥१॥ ब्रम्हलोकतृणीकारोवैराग्यस्यावधिर्मतः
॥ देहात्मवत्परात्मत्वदार्ढ्ये बोधःसमाप्यते॥२॥ ध्यातृध्यानेपरित्यज्य क्रमा

(गीता)

द्ध्येयैकगोचरं॥ निवातदीपवच्चित्तंसमाधिरभिधीयते॥३॥ नद्वैतंभास

(पंच०)

तेनापिनिद्रातत्रास्तियत्सुखं॥ सब्रम्हानंदइत्याहुभगवानर्जुनंप्रति॥४॥
माभवग्राह्यभावात्मा ग्राहकात्माचमाभव॥ भावनामखिलांत्यक्त्वायच्छिष्टं

समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत्॥ न शक्यते वर्णयि
तुं गिरा तदा॥ स्वयं तदंतःकरणेन गृह्यते॥७॥ रूपं दृश्यं लोचनं दृक् तत् दृश्यं दृ
(वाक्य सुधा)
क्षु मानसं॥ दृश्या धीवृत्तयः साक्षी दृगेव न तु दृश्यते॥१॥ अस्ति ब्रम्हेति चेद्वेद
(पंच०)
परोक्षज्ञानमेव तत्॥ अहं ब्रम्हेति चेद्वेद साक्षात्कारः स उच्यते॥२॥ इदं सुदुर्लभं ज्ञा
ष
नं जन्मकोटिशतायुतैः॥ प्राप्यते पुरुषव्याघ्रैर्गुरुशुश्रूणा दिना॥३॥ नातो
हिततमं किंचिन्मनुष्यायास्ति साधनं॥ सुखावाप्त्यै समूलस्य दुःखस्य च
(आत्मपु०)
विनाशने॥४॥ मुक्तिस्तु ब्रम्हतत्वस्य ज्ञानादेव न चान्यथा॥ स्वप्नबोधं विना
नैव स्वस्वप्नो हीयते यथा॥५॥ पूर्णे बोधे तदन्यौ द्वौ प्रतिबद्धौ यदा तदा॥ मोक्षो
(पंच०)
विनिश्चितः किंतु दृष्टं दुःखं न नश्यति॥६॥ संसारार्णवमग्नानां जंतूनामविवे
नां
किनां॥ अगतीनां गतिः साक्षात् ज्ञानमेव हि केवलं॥७॥ संसारतापदग्धा आत्म
(रामा०)
ज्ञानामृतांभसा॥ तापशांतिर्न चान्येन सत्यमेव न संशयः॥८॥ वरिष्ठं सर्वधर्मे
भ्यो ज्ञानं मोक्षैकसाधनं॥ नास्ति ज्ञानात्परो धर्म इति वेदार्थनिर्णयः॥९॥ ब्रम्ह
वेदनमात्रेण ब्रम्हाप्नोत्येव मानवः॥ अत्र नास्त्येव संदेहस्त्रिर्वः शपथयाम्य
हं॥१०॥



तमो निवृत्तौ सूर्यस्तु यथा नान्यदपेक्षते॥ तथाऽज्ञाननिवृत्तौ तु ज्ञानं नान्य
दपेक्षते॥११॥ यथा वन्हिर्महादीप्तः शुष्कमार्द्रं च निर्दहेत्॥ तथा शुभाशुभं
कर्म ज्ञानाग्निर्दहति क्षणात्॥१२॥ ब्रम्हाकारात्तत्वमस्यादिवाक्यैर्या धीवृत्तिर्ब्र
म्हनि ध्याभिधानात्॥ उक्ता वेदे मूलमज्ञानमेषा जग्ध्वात्मानं घातयेत्पूर्णवन्हौ॥१३॥
श्व
इयं हि वेदस्य परा हि निष्ठा मुनीश्वराणामपि शंकरस्य तु॥ इतोऽन्यथा ये वि
दुरंधकूपे पतंति ते मोहफणींद्रदष्टाः॥१४॥ अध्यस्त तातश्र ध स्वना त्र
मोहं कुरुष्व भो॥ ज्ञानस्वरूपी भगवानात्मा त्वं प्रकृतेः परः॥१५॥ यदा चर्म
वदाकाशं वेष्टयिष्यंति मानवाः॥ तदा देवमविज्ञाय दुःखस्यांतो भविष्य
ति॥१६॥ इति श्वेताश्वतरश्रुतिः॥ इ० अमृ० पंचदशः सर्गः॥१५॥ ५१॥

सर्ग १६ श्रीगु०॥ ॐ किमज्ञानमिति॥ रज्जुज्ञानमिनाद्विती० इ० नि० म० श्रु०॥ अद्वि
यजं परब्रम्ह॥१॥ एकमेवाद्वितीयं चेत्यस्तीह ब्रम्हलक्षणं॥ नामरूपेन व
स्यांशौ तयोरप्यनुद्भवात्॥१॥ अज्ञानमेवास्य हि मूलकारणं तद्धानमे
वात्र विधौ विधीयते॥ विद्यैव तन्नाशविधौ पटीयसी न कर्म तज्जं सविरो
धमीरितं॥१॥

यदन्यदन्यत्र विभाव्यते भ्रमाद् अध्यासमित्याहुरमुं विपश्चितः॥ असर्पभूतेऽपि
हि भावनं यथा रज्ज्वादिके तद्वदपीश्वरे जगत्॥२॥ इ० रामगीतायां – अना
दिरूपमूलाज्ञान ५ – भो भगवन् प्राणीनां दुःखं केन जायते – शरीरपरिग्र
हेण॥ शरीरपरिग्रहः केन जायते – कर्मणा – कर्म केन जायते – रागादिना –
रागादिः केन जायते – अभिमानेन॥ अभिमानः केन जायते – अविवेकेनः
अविवेकः केन जायते – अज्ञानेन – अज्ञानं केन जायते – अनादिः अनुत्प
न्नं – अनेन अज्ञानेन किं जायते – अविवेकरितिपुनरवरोहेण दृष्टव्यं॥ अं
ते अज्ञानस्य कदा निवृत्तिः – ज्ञानेन – ज्ञानं केन जायते – आत्मानात्मविचारे
ण॥ तस्य विचारस्य अधिकारिः कः – साधनचतुष्टयसंपन्नः॥ या हेतु अ
ज्ञान अनादि आ – अपि मायेति मायायाः स्वतः सिद्धिरिहेष्यते॥ सुषुप्त
स्य यथा सुप्तिः सुप्त्यैवेह प्रसिध्यति॥१॥ सुषुप्तो न च तां वेत्ति स्वयं करणसं
(आत्मपु०)
क्षयात्॥ न चान्यो जागरूकोपि तस्य सा विषयो न हि॥ इ० शंकरानंद॥
*:
तथा च वार्त्तिककारैः॥ – अविद्याऽस्तीत्यविद्यायामेवासित्वं प्रकल्प्यते॥

*: द्रष्टृदृश्याला विषयं नासोहि सिद्ध नविध्याति॥१॥ तैसाचि आत्मा स्वयंज्योति ८५ –



न युक्तस्तमसा सूर्यो नापि चासौ तमोमयः॥ सच्छून्ययोर्विरोधित्वाच्छून्यमा
सीत्कथं वद॥१॥ पंचकोशपरित्यागे साक्षिबोधावशेषतः॥ स्वस्वरूपं स एव स्या
च्छून्यत्वं तस्य दुर्घटं॥२॥ स्वयमेवानुभूतित्वाद्विद्यते नानुभाव्यते॥ ज्ञातृ
ज्ञानांतराभावादज्ञेयो न तु सत्तया॥३॥ स्वात्सत्वं तु न कस्मैचिद्रोचते विभ्रमं वि
ना॥ अत एव श्रुतिर्बाधं ब्रूते चासत्ववादिनः॥४॥ एकमेवाद्वितीयं सत्सिद्धम
त्र तु केचन॥ विह्वला असदेवेदं पुरासीदित्यवर्णयन्॥५॥ मग्नस्याब्धौ यथाक्ष
णि विह्वलानि तथास्य धीः॥ अखंडैकरसं श्रुत्वा निष्प्रचारा बिभेत्यतः॥६॥ गौ
डाचार्या निर्विकल्पे समाधावन्ययोगिनां॥ साकारब्रम्हनिष्ठानामत्यंतं भयमू
चिरे॥७॥ भगवत्पूज्यपादाश्च शुष्कतर्कपटूनमून्॥ आहुर्माध्यमिकान् भ्रां
तानचिंत्येस्मिन्सदात्मनि॥८॥ अनादृत्य श्रुतिं मौर्ख्यादिमे बौद्धास्तमस्विनः॥
आपेदिरे निरात्मत्वमनुमानैकचक्षुषः॥९॥ इ० (पंचद०) ~~माधवाचार्य~~॥ ऐसा आत्मा उ
पाधीवीन॥ ४९॥ बीजजाग्रत्तथा जाग्रन्महाजाग्रत्तथैव च॥ जाग्रत्स्वप्नस्त
था स्वप्नः स्वप्नजाग्रत्सुषुप्तिहि॥ अज्ञानस्य इमाः सर्वा भूमिका रघुनंदन॥१॥
इ० वासिष्ठे – तैसें नोळखितां स्वरूप – ७८ – तावत्सत्यं जगद्भाति शुक्ति*:

*: कारजतं यथा॥ यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमद्वयम्॥१॥ चित्तमेव हि संसारं तत्प्रयत्नेन शोधयेत्॥ यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनं॥१॥ इ० अ० गीता॥ १ः सर्गः १५०

श्रीगु०॥ ॐकः संसार इति॥ अनाद्यविद्यावासनयाजातोहं० इ० नि० मृ० श्रु०॥ अनादि

वासनेंकरून१॥ अनात्मनि शरीरादावात्मबुद्धिस्तुयाभवेत्॥ सेवमायातथैवासौ सं

(रामा०)
सारः परिकीर्त्यते॥१॥ विद्यामायाम्हणजे ज्ञान ४-रूपे इ निश्चितेपूर्वं मायायाः कु

(रामा०)
ळनंदन॥ विक्षेपावरणेतत्रप्रथमं कल्पयेज्जगत्॥१॥ इ० रामवचनं॥ तथाचविद्या

रण्यः-विक्षेपावृत्तिरूपाभ्यां द्विधाऽविद्याव्यवस्थिता॥ नभातिनास्ति कूटस्थ

(पंच०)
इत्यापादनमावृतिः१॥-संचितासहक्रियमाण२३-रज्जुज्ञाने विकंपादि शनैरे

वोपशाम्यति॥ पुनर्मंदांधकारेसारज्जुश्छिन्नोरगीभवेत्॥१॥ एवंप्रारब्धभोगोपि

शनैःशाम्यतिनोहठात्॥ भोगकालेकदाचित्तुमर्त्योहमितिभासते॥२॥ नैतावता

(आब्धि)
पराधेन तत्वज्ञानं विनश्यति॥ जीवन्मुक्तिव्रतंनेदं किंतुवस्तुस्थितिःखलु॥३॥

दशमोपिशिरस्ताडन् रुदन्बुध्वानरोदिति॥ शिरोव्रणस्तुमासेन शनैः शाम्य

(पंच०)
तिनोतदा॥४-हेंहि देहींसद्बुद्धि जया २५-अज्ञानजनबोधायप्रारब्धं वक्ति

(ग्रंथांतरे)
वैश्रुतिः॥ तस्यजन्मांतराभावात्प्रारब्धंनैवविद्यते॥१॥ जैसासूर्यदर्शी बिंब

ळा ३१॥ उपाधौ यथाभेदतां सन्मणीनां तथाभेदता बुद्धिभेदेषु तेपि॥ यथा

ःः चंद्रिकापाजनें-चंद्रजळ तथा-चंद्रजळ तवापी हृविश्वा॥१॥ असो नदीप्रवाही जैसा ३८-



नद्यांकीटा इवावर्त्ताद्-आवर्तांतरमाशुते॥ व्रजंतोजन्मनोजन्मलभंते नैवनिर्वृतिं॥१॥

सच्चिदानंदमहाकाश३५-सदानंदे चि[illegible]दाकाशे मायामेघोतडिन्मनः॥ अहंतंग

र्जनंतत्र धाराऽसारो हियत्तमः॥१॥ महामोहांधकारेस्मिन् देवोवर्षतिलीलया॥

अस्यावृष्टेर्वि[illegible]राम(ा)य प्रबोधैकसमीरणः॥२॥ इ० सदाचारे-सायंसायंवासवृक्षं

समे[illegible]ताः प्रातःप्रातस्तेन तेन प्रयांति॥ त्यक्त्वान्योन्यं तंचवृक्षं विहंगास्तद्वत्तद्वज्ज्ञा

तयोज्ञातयश्च॥१॥ इ० शिवगी०॥ म्हणोनि कर्मयोगोपास्ती ६२-कर्मशास्त्रे कु

तोज्ञानं तर्केनैवास्ति निश्चयः॥ सांख्ययोगौ द्विधापन्नौ शाब्दिकाः शब्दतत्पराः॥

अन्येपाषांडिनः सर्वे ज्ञानवार्तासु दुर्बलाः॥ एकंवेदांतविज्ञानं स्वानुभूत्याविरा

जते-१-२-इ० सदाचारे॥ नकर्मणामनुष्ठानैर्नदानैस्तपसापिवा॥ कैवल्यंलभते म

र्त्यः किंतुज्ञानेन केवलं॥१॥ इ० शिवगीतायां॥-ईश्वरार्पणबुद्ध्यावा कर्मजातंप्र

कुर्वतः॥ पुंसोविरक्तिसिद्धिः स्यात्सर्वथैवापिकामिनः॥१॥ इ० शंकरानंदः॥

इति अमृतार्णवस्य सप्तदशः सर्गः -५-

श्रीगु॰ ॥ॐ कोबंध इति॥ पितृमात्र सहोदरदा॰ इ॰ नि॰ मू॰ श्रु०॥ अध्यात्म

रा॰- देहएव महागेह मदेहस्य चिदात्मन:॥ तस्याहंकार एवास्मिन्मंत्रीते नै

वकल्पित:॥१॥ देहगेहाभिमानं स्वं समारोप्य चिदात्मनि॥ तेन तादात्म्यमापन्न:

स्वचेष्टितमशेषत:॥२॥ विदधाति चिदानंदे तद्भासित वपु: स्वयं॥ तेन संक

ल्पितो देही संकल्पनिगडावृत:॥३॥ पुत्रदारधनादीनि संकल्पयति चा निशं

॥ संकल्पयन्स्वयं देही परिशोचति सर्वदा॥४॥ तो अहं संकल्प ब्रम्हाचा ९॥

चिद्बिंबसाक्षात्मधियां प्रसंगतस्त्वेकत्र वासादनलाक्त लोहवत्॥ अन्योन्य

मध्यासवशात्प्र[illegible]तीयते जडाजडत्वंच चिदात्मचेतसो:॥१॥ इ॰ रामगीता॰

पटचित्रांचे वस्त्राभास १२- वस्त्राभासस्थितान्वर्णान्यद्वदाधार वस्त्रगान्

॥ कल्पंति जीवनामानो बहु[illegible]धा संसरंत्यमी॥१॥ पंचदश्यां॥ अहंकारादिस

चित्सुख १४॥ अयंजीवो न कूटस्थं विविनक्ति कदाचन॥ अनादिरविवेको

(वं॰चं॰)

यं मूलाविद्येति गम्यतां॥१॥ यद्वा- देहोहमिति याबुद्धिरविद्या सा प्रकीर्तिता

॥ नाहं देहश्चिदात्मेति बुद्धिर्विद्येति भण्यते॥२॥ देहोऽहंभावमापन्नो राजाऽहं

॥ लोके बिभूत:॥ इत्यासि मनुते जंतु: कामि वैद् अस्मसं स्थितो॥३॥ (शिवगीता)





त्वगस्थि मांस विण्मूत्र रेतोरक्तादि संयुत:॥ विकारी परिणामी च देह आत्मा क

थं वद॥४॥ यदिदं दृश्यते सर्वं राज्यं देहादिकं च यत्॥ यदि सत्यं भवेत्तत्र आयास:

सफलश्च ते॥५॥ भोगा मेघवितानस्थ विद्युल्लेखेव चंचला:॥ आयुरप्यग्नि

संतप्त लोहस्थ जलबिंदुवत्॥६॥ यथा व्यालगलस्थोपि भेको दंशानपेक्षते॥

(अ॰ रामा॰)

तथा कालाहिनाग्रस्तो लोको भोगानशाश्वतान्॥७॥ या प्रकारीचा अहंकार १८

छायेव लक्ष्मीश्चपला प्रतीता[illegible] तारुण्यमंबुर्मिवदध्रुवं च॥ स्वप्नोपमं स्त्री[illegible]

सुखमायुरल्पं तथापि जंतोरभिमान एष:॥१॥ ममेति बध्यते जंतुर्नममेति वि

मुच्यते॥ ममत्वेन भवेज्जीवो निर्ममत्वेन केवल:॥२॥ स्वसंकल्पवशाद्बद्धो निसं

(रामा॰)

कल्पाद्विमुच्यते॥ द्रष्टा दृश्यवशाद्बद्धो दृश्याभावे विमुच्यते॥३॥ ज्याशी

माझें माझें म्हणावें २०- आत्माज्ञानपय:पुण्यो देहो मांसमयोऽशुचि:॥ तयोरैक्यं

प्रपश्यंति किमज्ञानमत:परं॥१॥ अन्यथा संतमात्मानमन्यथा प्रतिपद्यते॥ किं ते

न न कृतं पापं चोरेणात्मापहारिणा॥२॥ असत्यायेव देंपातक २२- देहात्म बुध्य

यत्पापं न तद्गोवधकोटिभि:॥ कृतानि सर्वपापानि ध्रुवं देहात्मवादिना॥१॥ जातो

ऽहं जनको ममैष जननी क्षेत्रं कलत्रं कुलं पुत्रा मित्रमरातयो वसुबलं विन:

॥ धामु हद्रांधवा:॥ चित्तस्पंदितं कल्पनामनुभवन् विद्वान विद्यामयीं निद्रामेति विबुध[illegible]

धान स्वप्नाभिमान पश्यति॥२॥ (गं॰ भा॰ सं॰)

॥ अथ युक्तो यः सुखासीनः स्वस्तिकं तत्प्रयत्नतः॥

यमनियमासनधोरणी- ब्रम्हचारी पुमान् दांतो जितबाह्येंद्रियः स्थिरः॥ गुरुभक्तः

सदायोगमभ्यसेद्रागनाशनं॥१॥ स्ववर्णाश्रमसंप्राप्ता नित्यनैमित्तिकाः क्रियाः॥ कृ

त्वाऽरण्यादिके स्थानं शीतातपविवर्जिते॥२॥ वायुशून्ये तथा देशे सर्वोपद्रववर्जि

ते॥ मनसश्च दशोस्तद्वन्नित्यमानंदकारिणि॥३॥ योगाभ्यासरतस्तत्र स्थासनं परि

कल्पयेत्॥४॥ दर्भान् कृष्णाजिनच्छन्नांश्चैवं कृष्णाजिनास्थितं॥ अन्यद्वामृदुलं

येन बाधा तस्य न संभवेत्॥४॥ नात्युच्छ्रितं नातिनीचं देशे शब्दविवर्जिते॥ परि

कल्प्यासनं तत्र संविशेद्योगदृक्पुमान्॥५॥ समं कायशिरोग्रीवं धारयन्नचलं

स्थिरः॥ संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्॥६॥ अहिंसां सत्यमस्तेयं

यब्रम्हचर्यापरिग्रहान्॥ सेवमानो यमान्नियं(नि)यमानपि शक्तितः॥७॥ तपः स्वा

ध्यायकेशान प्रसादादीन् हि बुद्धिमान्॥८॥ भूमौ दर्भासने रम्ये सर्वदोष

विवर्जिते॥ यमी नियमयुक्तश्च स्थिरचित्तः शिवाश्रयः॥९॥ पद्मकं स्वस्तिकं वापि

भद्रासनमथापि वा॥ बध्वा योगासनं सम्यगुत्तराभिमुखः स्थितः॥१०॥ प्राणायामं

स्तथा कुर्याद्योगी जितपरिश्रमः॥११॥ जानूर्वोरंतरे सम्यक्कृत्वा पादतले उभे॥ ∴



॥ मनोहारं नित्यं योगीविवर्जयेत्॥५॥ (आत्मपु०)

मेढ्रादुपरि विन्यस्य सव्यगुल्फं ततोपरी॥ गुल्फांतरं च निक्षिप्य सिद्धासन

मिदं भवेत्॥१२॥ अंगुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु॥ ऊर्वोरुपरि पा

दौ द्वौ कृत्वा पद्मासनं भवेत्॥१३॥ गुल्फौ च वृषणः स्याधः सीवन्याः पार्श्वयोः क्षि

पेत्॥ पार्श्वपादौ च पाणिभ्यां बध्वा भद्रासनं भवेत्॥१४॥ सव्याहृतिं सप्रणवां गा

यत्रीं शिरसा सह॥ त्रिः पठेदायतः प्राणः प्राणायामः स उच्यते॥१५॥ त्रिविधः

स तु विज्ञेयो रेचपूरककुंभकैः॥१६॥ शब्दादिविषयाः पंच मनश्चैवातिचंचलं

॥ मनसस्स्वैरयोगोयः प्रत्याहारः स ईरितः॥१७॥ आगमस्याविरोधेन व्यूहनं

(आत्मपु०)

तर्क उच्यते॥१८॥ एतद्विषये याज्ञवल्क्यवचनं"- यद्यत्पश्यति तत्सर्वं पश्ये

दात्मानमात्मनि॥ प्रत्याहारः स च प्रोक्तो योगविद्भिर्महात्मभिः॥१॥ मनः संक

ल्परहितं संक्षिप्यात्मनि बुद्धिमान्॥ धारयेन्निश्चलं तत्र धारणा सा प्रकीर्तिता॥२॥

धारणाविषये तुल्यबोधसंततिसंभवः॥ नैरंतर्यादन्यबोधाग्रहीतो ध्यानमी

रितं॥३॥ ध्यातृध्यानादिकं यत्र समभावान्न लभ्यते॥ स समाधिरिति प्रोक्तः

पंडितैरात्मवादिभिः॥४॥ भयं क्रोधमथालस्यमतिस्वप्नातिजागरं॥ अत्याह

∴

पुनश्च प्राणायामक्रमः - प्राणायामक्रमं चेमं कथयंति मनीषिणः ॥ नासिकापुरमंगु

ल्या पिधायैकेन मारुतं ॥१॥ आकृष्य धारयेद्वायुं मुंचेद्वापि शनैः शनैः ॥८७॥ प्राणा

यामं प्रणवतः कुर्याद्वाप्य विचक्षणः ॥ एकद्वित्रिचतुःपंचमात्राः स्युध्या शनैः शनैः २

६

॥ निमिषोन्मेषणे मात्रा तालो लघ्वक्षरं तथा ॥ प्राणायामस्य संख्यार्थं स्मृतो द्वाद

मात्रिक ॥ इ० मार्कंडेयेनोक्तं ॥१॥ असो योगसाधी निष्काम ५२ - निर्गुणोपास्तिसा

मर्थ्यास्तत्र तत्वमवेक्षते ॥ पुनरावर्तते नायं कल्पांते च विमुच्यते ॥१॥ अथवनायेन

योगच्छेद् विरक्तोपि मानवः ॥ ब्रम्हलोके विरक्तः सन्मुक्तो भवति वात्र वा ॥२॥ प्राणा

(आत्मपु०)

दिचिंतनादत्र मार्गमेतं ततो व्रजेत् ॥ ७॥ कदाचिच्छून्यातें त्रासून ५७ - शुचीनां

(गीता)

श्रीमतां गेहे साभिलाषोऽभिजायते ॥ अथवा योगिनामेव कुले भवति धीमतां ॥९

असो आतां सिद्धीची कथा ६० - सिद्धयोऽष्टादश प्रोक्ता धारणायोगपारगैः

॥ तासामष्टौ मत्प्रधाना दशैव गुणहेतवः ॥१॥ अणिमा महिमा मूर्तेर्लघिमा प्रा

प्तिरिंद्रियैः ॥ प्राकाश्यं श्रुतदृष्टेषु शक्तिः प्रेरणमीशिता ॥२॥ गुणेष्वसंगो व

शिता यत्कामस्तदवस्यति ॥ एता मे सिद्धयः सोम्य अष्टावौत्पत्तिका मताः ॥३॥



अनूर्मिमत्वं देहेऽस्मिन् दूरे श्रवणदर्शनं ॥ मनोजवं कामरूपं परकायप्रवेशनं ॥१॥

स्वच्छंदमृत्युर्देवानां सहक्रीडानुदर्शनं ॥ यथासंकल्पसंसिद्धिराज्ञाप्रतिहता

गतिः ॥२॥ त्रिकालज्ञत्वमद्वंद्वं परचित्ताद्यभिज्ञता ॥ अग्न्यर्कांबुविषादीनां

प्रतिष्टंभोऽपराजयः ॥१॥ इ० भागवते एकादशस्कंधे ॥ - आतां सगुणब्रम्होपा

स्ती ६५ ॥ दुर्दांतो हि यथा वाजी कालेन दममाव्रजेत् ॥ शिक्ष्यमाणो नरैस्तज्ज्ञैः

शिक्षाभेदैरनेकशः ॥१॥ दुर्दांतमन एवं हि कामक्रोधवशंगतं ॥ गुरुशास्त्रैः शि

(आत्मपु०)

क्ष्यमाणं दांतं भवति कालतः ॥२॥ मां पूजयति निष्कामः सर्वदा ज्ञानवर्जितः ॥

समे लोकसमासाद्य भुंक्ते भोगान्यथेप्सितान् ॥३॥ ज्ञात्वा मां पूजयेद्यस्तु सर्वका

मविवर्जितः मया समानरूपः सन्मम लोके महीयते ॥४॥ इष्टापूर्तादिकर्माणि

मत्प्रीत्या कुरुते तु यः ॥ मल्लोके स श्रियं भुंक्ते मत्तुल्यप्राभवं भवेत् ॥५॥ य

स्तु शांत्यादियुक्तः सन् सन्मामात्मत्वेन पश्यति ॥ सजायते परं ज्योतिरद्वैतं

(रामा०) (शिवगीता)

ब्रम्ह केवलं ॥६॥ अतः स्वस्वरूपावस्थानं मुक्तिरित्यभिधीयते ॥७॥ हटयोगें

रीं भक्तियोग ७८ - यमादिर्धीनिरोधश्च व्यवहारस्य संक्षयः ॥ स्पष्टुर्हे त्वाद्या

॥ उपरनिर्दिष्ट संकर ईरितः ॥१॥ तत्त्वबोधः प्रधानः स्यात् साधनौघः प्रदर्शितः ॥७॥ इ० अ० अष्टा

दशः सर्गः ॥

श्रीगु० ॥ ॐ को मोक्ष इति ॥ नित्यानित्यवस्तु विचारादनित्य० ६० नि० मू० श्रु० १॥
यापरी येथे झाला मुक्त ५ - ज्ञापानुग्रहसामर्थ्यं यस्यासौ तत्त्वविद्यादि ॥ तत्र शा
पादिसामर्थ्य फलं स्यात्तपसो यतः ॥ असो मोक्ष विचार कैसा ७ ॥ स्वसंकल्प वशा
द्बद्धो निःसंकल्पाद्विमुच्यते ॥ द्रष्टा दृश्य वशाद्बद्धो दृश्याभावे विमुच्यते ॥१॥
मन एव मनुष्याणां कारणं बंधमोक्षयोः ॥ बंधाय विषयासक्तं मुक्त्यै निर्विषयं स्मृ
तं ॥२॥ यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ॥ अतो निर्विषयं नित्यं म
नः कार्यं मुमुक्षुणा ॥३॥ समासक्तं यथा चित्तं जंतोर्विषयगोचरे ॥ यद्येवं ब्र
ह्मणि स्यात्तत्को न मुच्येत बंधनात् ॥४॥ इच्छामात्रमविद्येयं तन्नाशो मोक्ष उ
च्यते ॥ भोगेच्छा मात्रको बंधस्तत्त्यागो मोक्ष उच्यते ॥५॥ अज्ञान हृदयग्रंथि
(३० श्रुतयः)
नाशो मोक्ष इति स्मृतः ॥६॥ हे मोक्षाची यथार्थ स्थिति ७ ॥ कित्येक म्हणती
साकार ७ - अत्रास्मिन्विषये वज्रसूचि वचनानि द्रष्टव्यानि ॥ तथापि तात्पर्यं
वक्ष्यामि - महावाक्यविवरणोक्तः समष्टी व्यष्टीरूपोऽयं प्रपंचस्तत्र तत्त्वं श
ब्दयोः शबलं वाच्यांशं परित्यज्य शुद्ध लक्ष्यांशमंगीकृत्य य जीव परमेश्वर

॥ श्री ॥ यारैश्वर्य सप्तवमोक्षः ॥ स्वात्मज्ञान सिद्धि ध्यानजरी २२ -



साधिष्ठानो विमोक्षादौ जीवोऽधिक्रियते न तु ॥ केवलो निरधिष्ठान विभ्रांतेः क्वाप्य
सिद्धितः ॥१॥ अधिष्ठानांशसंयुक्तं भ्रमांशमवलंबते ॥ यदा तदाऽहं संसारी जीव
इत्यभिमन्यते ॥२॥ भ्रमांशस्य तिरस्कारादधिष्ठान प्रधानता ॥ यदा (तदा) चिदात्माह
मसंगोऽस्मीति बुध्यते ॥३॥ तादृशेनापि बोधेन संसारो विनिवर्तते ॥ यक्षानुरू
(पंचदशी)
पो हि बलिरित्याहुर्लौकिका जनाः ॥४॥ असो ये रामतांची स्थिति ४७ ॥ कर्मशास्त्रे
कुतो ज्ञानं तर्के नैवास्ति निश्चयः ॥ सांख्ययोगौ द्विधापन्नौ शाब्दिकाः शब्दतत्
पराः ॥१॥ अन्ये पाषांडिनः सर्वे ज्ञानवार्तासु दुर्बलाः ॥ एकं वेदांत विज्ञानं स्वानु
भूत्या विराजते ॥२॥ मुक्तिस्तु ब्रह्मतत्त्वस्य ज्ञानादेव नचान्यथा ॥ स्वप्रबोधं वि
(सदाचार व पंच०)
ना नैव स्वस्वप्नो हीयते यथा ॥३॥ असो अज्ञानवनींनानाऽ५ ॥ गर्जति तावच्छा
स्त्राणि जंबुका विपिने यथा ॥ न गर्जति महाशक्तिर्यावद्वेदांतकेसरी ॥१॥ अभ्या
म्हणजे तो पूर्ण ॥ ६४ ॥ सदा शांत्यादियुक्तः सन् मात्मन्यात्मानमीक्षते ॥ यस्तदा ध्यान
योगेन तन्निदिध्यसनं स्मृतं ॥१॥ यदा सर्वे प्रमुच्यंते कामा येस्य हृदि श्रिताः ॥ अ
थ मर्त्योऽमृत भवत्यत्र ब्रह्म समश्नुते ॥२॥ नित्यमेव हि संसारं तत्प्रयत्नेन शो

॥ श्री ॥ ध्येयद ॥ यच्चित्तसज्जन्यो अभयतो गुह्य मनरुसनोचनं ॥ ३ ॥

चित्तस्य हि प्रसादेन हंति कर्म शुभाशुभं॥ प्रसन्नात्मात्मनि स्थित्वा सुखमक्षय
मश्नुते॥४॥ चित्तं चिद्विजानीयात्तकार रहितं यदा॥ तकारो विषयाध्यासो ज
पारागो यथा मणौ॥५॥ इ० मैत्रायणी योपनिषच्छ्रुतिः॥ मृणोति संकल्पतो बंधु
स्वसंकल्प वशाद्बद्धो निःसंकल्पाद्विमुच्यते॥ द्रष्टा दृश्य वशाद्बद्धो दृश्याभावे
विमुच्यते॥१॥ न मोक्षो नभसः पृष्ठे न पाताले न भूतले॥ सर्वाशा संक्षये चेतः
क्षयो मोक्ष इतिष्यते॥२॥ मोक्षस्य न हि वासोऽस्ति न ग्रामांतरमेव वा॥ अज्ञानहृ
दयग्रंथिनाशो मोक्ष इति स्मृतः॥३॥ अतः स्वरूपावस्थानं मुक्तिरित्यभिधी
(शिवगीता)
यते॥७॥ इति अ० एकोनविंशतितमः सर्गः॥५॥

ॐ मृतो भाति तदज्ञानकृतमावरणं विदुः॥२॥ नद्यां ममार दशम इति शोचन् प्ररोदिति॥

सर्ग २०॥ श्रीगु०॥ ॐ किं सुख इति॥ सच्चि[illegible]दा रूपं स्वरूप० इ० नि० मृ० श्रु०॥ आतां सु
खम्हणजे काय २ - चित्तस्य हि प्रसादेन हंति कर्म शुभाशुभं॥ प्रसन्नात्मात्म
(मैत्रायणी उप०)
नि स्थित्वा सुखमव्ययमश्नुते॥१॥ स्वयें कोणी एक दशम ७ - नवसंख्याहृतज्ञा
नो दशमो विभ्रमात्सदा॥ न वेत्ति दशमोस्मीति वीक्ष्यमाणोपि तान्नव॥१॥ न
भाति नास्ति दशम इति स्वं दशमं तदा॥ अज्ञानकृत विक्षेपं रोदनादि विदुर्बुधाः



परोक्षज्ञानतो चि[illegible]असे॥४॥ न मृतो दशमोऽस्तीति श्रुत्वाप्तवचनं तदा॥ परोक्षत्वे
न दशमं वेत्ति स्वर्गादि लोकवत्॥१॥ त्वमेव दशमोऽसीति गणयित्वा प्रदर्शितः॥ अप
रोक्षतया ज्ञात्वा हृष्यत्येव न रोदिति॥२॥ स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतं॥
(पंच०)
अहंकारादि देहांता प्रत्यगात्मेति गीयते॥३॥ असो उभय आवरण १४॥ परोक्षज्ञा
नतो नश्येदसत्वावृत्तिहेतुता॥ अपरोक्षज्ञाननाश्या ह्यभानावृत्तिहेतुता॥१॥ परो
क्षज्ञानमश्रद्धा प्रतिबध्नाति नेतरत्॥ अविचारोऽपरोक्षस्य ज्ञानस्य प्रतिबंध
(पंच०)
कः॥२॥ हा चिन्न्याय स्वरूपी झाला॥२३॥ संसारासक्तचित्तः संश्चिदाभासः
कदाचन॥ स्वयंप्रकाशकूटस्थं स्वतत्त्वं नैव वेत्त्ययं॥१॥ न भाति नास्ति कूटस्थ
इति वक्ति प्रसंगतः॥ कर्ता भोक्ताहमस्मीति विक्षेपं प्रतिपद्यते॥२॥ अस्ति कूटस्थ
इत्यादौ परोक्षं वेत्ति वार्तया॥ पश्चात्कूटस्थ एवास्मीत्येवं वेत्ति विचारतः॥३॥
कर्ता भोक्तेत्येवमादि शोकजातं प्रमुंचति॥ कृतं कृत्यं प्रापणीयं प्राप्तमित्येव
तुष्यति॥४॥ परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकं॥ बुद्धिपूर्वकृतं पापं कृ
त्स्नं दहति वह्निवत्॥५॥ अपरोक्षात्मविज्ञानं शाब्दं देशिकपूर्वकं॥ संसारकार

ॐ पाहाणताम्र आंड भास्करः॥५॥ संतप्त पाति वांबोळिके २५ (पंच०)

यौवनेनाभिसंपन्नो रूपशीलादिसंयुतः॥ पुराणन्याय मीमांसा धर्मशास्त्रांगामि

श्रिताः॥१॥ वेदाःस्थानानि विद्यानां धर्मस्यचचतुर्दश॥ सर्वाण्येतानधीयानो

ऊहापोहविशारदः॥२॥ मात्रापित्रातथाऽचार्यैः शिक्षितो विनयान्वितः॥ वज्र

सारसमानांगो बलवान्बलभिद्यथा॥३॥ तस्येयंपृथिवीसर्वा सप्तसागरमे

खला॥ सर्वैर्वित्तैश्च संपूर्णानाभिकांचनपर्वता॥४॥ स्वाधीना चेद्भवेत्सोय

मानंदोमानुषपरः॥६॥ शतं येमानुषाः प्रोक्ता आनंदा अधिका इह॥ एकोमनुष्य

गंधर्वानंदः सपरिकीर्तितः॥५॥ तेये मनुष्यगंधर्वानंदाःस्युः शतसंख्यया॥

देवगंधर्वजः सोयमेक आनंद ईरितः॥६॥ देवगंधर्वजानंदाः शतं ये परिकी

र्तिताः॥ भवेत्सएक आनंदः पितृणां चिरवासिनां॥७॥ पितृणां चिरलोकानामा

नंदायेशतंस्मृताः॥ आजानजानां देवानामेकः सपरिकीर्तितः॥८॥ देवयोनि

प्रजातानामानंदायेशतंस्मृताः॥ सएकः कर्मदेवानां कर्मणायेदिवंगताः॥९॥ आनं

दाः कर्मदेवानां शतं येपरिकीर्तिताः॥ वसुरुद्रादिदेवानामेक एव हि संस्मृतः॥१०॥

वसुरुद्रादिदेवानामानंदायेशतंस्मृताः॥ इंद्रस्यैकः सविज्ञेय आनंदोजग

*ः दीप्तगुः॥११॥ आनंदोऽकस्य शतं मनुष्य बृहस्पतेः॥ एक एव शतं तस्य यथाऽऽनंदो बृहस्पतेः॥ प्रजापतेर्वि

राजः स एक एव प्रकीर्तितः॥१२॥



प्रजापतेः शतं येस्युरानंदा एक एव सः॥ भवेत् परमआनंदो ब्रम्हणः सूत्ररूपि

णः॥१३॥ अस्मात्परो न कोपिस्यादानंदो देहिनामिह॥ आनंदात्मानमाकाशमे

कं हित्वास्वयंप्रभं॥१४॥ आनंदवारिधेस्तस्य परमानंदरूपिणः॥ ब्रम्हानंदःप

रोऽस्माकं बिंदुमात्रं तु तस्य सः॥१५॥ आनंदस्तत एवायमनंतः परिकीर्तितः॥

आनंदात्मस्वरूपस्य स्वयं भातस्य सर्वदा॥१६॥ इ० आत्मपुराणे शंकरानंदः-

तोंतो त्यागो नियां आसन ७१- त्रिषुधामसुयद्भोग्यं०- एथपासूत-ते-नभू

मिशापोनन्यवन्हि रासिनन्यानिलोमेसिनचांबरंच॥५॥ एथपर्यंत -म

य्यनंतचिदंभोधौ विश्वविच्यादिकल्पना। उदेतुत्वाऽस्तमायां तु नमे वृद्धि

र्नचक्षयः॥ ६॥ धन्योऽहं धन्योऽहं कर्तव्यंमेन विद्यते किंचित्॥ धन्योऽहं

(पं०७०)

धन्योऽहं प्राप्तव्यं सर्वमद्य संपन्नं॥७॥ इ० अ० विंशतितमः सर्गः॥७॥

सर्ग २१॥ श्रीगु०॥ ॐ किं दुःखमिति॥ अनात्मरू० र०नि०मू०श्रु०॥- श्वासयेतां सोऽहितांमेला॥१

- हतय इवश्वसंत्य सुभृतोयदितेऽनुविधामहदहमादयोऽडमसृजन्यदनुग्रह

तः॥ पुरुषविधोन्वयत्रचरमोऽन्नमयादिषु यः सदसतः परंत्वमथयदेष्ववरो

*ः

*ः ध श्रुतं॥१० ८७ है

विचारपाहूं जातापूर्ण २४ - अनेन वपुषा कुर्यात्प्रणवादेरुपासनं॥ निर्गुणंच तथाब्रम्ह जानीयाच्छ्रेत्सुधीः पुमान्॥१॥ अनात्मरूपजे विषय ३१ - ब्रम्हलोकेऽथवा स्वर्गे मानुषे वा न विद्यते॥ विशेषः कोहि राजेंद्र सुखे विषयजे सदा॥१॥ आहारोस्ति हि सर्वत्र विविधः सर्वदेहिनां॥ देहाश्च सेंद्रियास्तद्वत्छलनाश्च मनोरमाः॥२॥ पारतंत्र्यंच सर्वत्र विद्यते सर्वदेहिनां॥७॥ पारतंत्र्य विषये इंद्रवचनं यथा ब्रम्हा महेश्वराधीनस्तथाऽहं ब्रम्हणोपि च॥ सुखस्यातिशयो दृष्टः सर्वलोकस्थितस्य हि॥१॥ जें नाहींच आदिमध्यांतीं ३३ - न यत्पुरस्तादुत यन्न पश्चान्मध्ये च तन्न व्यपदेशमात्रं॥ भूतं प्रसिद्धंच परेण यद्यत्तदेव तत्स्यादिति मे मनीषा॥१॥ यस्तु यस्यादिरंतश्च स वै मध्यंच तस्य तत्॥ विकारो व्यवहारार्थो यथा पार्थिव तैजसः॥२॥ अविनाशी सुखसाधावे - याचें परिसा समाधान ५९ - विवेके जागृति सति दोषदर्शन लक्षणे॥ कथमारब्ध कर्मापि भोगेच्छां जनयिष्यति॥१॥ नैव दोषो यतोऽनेकविधं प्रारब्धमीक्ष्यते॥ इच्छाऽनिच्छा परेच्छा च प्रारब्धं त्रिविधं स्मृतं॥२॥ अपथ्य

*: सेवितस्थीरा राजद्वार रता आणि जानंतर एव स्वानबुद्धिच्छं प्रारब्ध कर्मति॥३॥ नव्या तैन द्वाराचि तुमी
पारेषणापि साख्यते॥ धतर्ईश्वर एवाह गीतायां मर्जुनं प्रति॥४॥



सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि॥ प्रकृतिं यांति भूतानि निग्रहः किं करिष्यति॥५॥ अवश्यंभाविभावानां प्रतीकारो भवेद्यदि॥ तदा दुःखैर्न लिंपेरन् नलरामयुधिष्ठिराः॥६॥ नचेश्वरत्वमीशस्य हीयते तावता यतः॥ अवश्यंभाविता प्येषामीश्वरेणैव निर्मिता॥७॥ प्रश्नोत्तराभ्यामेवैतद्गम्यतेऽर्जुनकृष्णयोः॥ अनिच्छापूर्वकं चास्ति प्रारब्धमिति तच्छृणु॥८॥ अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः॥ अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः॥९॥ काम एष क्रोध एष रजोगुणसमुद्भवः॥ महाशनो महापाप्मा विद्ध्येनमिह वैरिणं॥१०॥ स्वभावजेन कौंतेय निबद्धः स्वेन कर्मणा॥ कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोपि तत्॥११॥ नानिच्छंतो नचेच्छंतः परदाक्षिण्य संयुताः॥ सुख दुःखे भजंत्येतत्परेच्छापूर्व कर्म हि॥१२॥ भर्जितानि तु बीजानि संत्यकार्यकराणि च॥ विद्वदिच्छा तथेष्टव्याऽसत्वबोधान्न कार्यकृत॥१३॥ दग्धबीजमरोहेपि भक्षणायोपयुज्यते॥ विद्वदिच्छाप्यल्पभोगं कुर्यान्न व्यसनं बहु॥१४॥ - तैसें नाहींच प्रयत्नाशी ६४ - अगामी प्रति बंधश्च वामदेवे समीरितः॥ एकेन जन्मना क्षीणो भरतस्य त्रिजन्मभिः॥१॥ सर्वा एककलार्ज *:

*: तौ रत्न अभ्यासेन नश्यति॥ इयं ज्ञानकृत आगामसञ्चि आता पिवर्द्धते॥२॥ ज्ञानोत्तरी कर्म करणे - ईश्वरउपासना निरंतर
- ७९-८४ - यावज्जीवं यो वेदांतार्थ ... निंद्य ... ॥१॥ ६७-६८ एकत्र ... नाति तत्ततः ॥

श्रीगु० ॥ ॐ स्वर्ग (कः) इति ॥ सत्संगः स्वर्गः ॥ इ० नि० मू० श्रुतिः ॥ – ब्रम्हसद्रूपपरिपूर्ण २ –

संतोऽनपेक्षा मच्चित्ताः प्रशांताः समदर्शिनः ॥ निर्ममा निरहंकारा निर्द्वंद्वा निष्परि

ग्रहाः ॥१॥ षड्भावादि विकारान्यो देहे पश्यति नात्मनि ॥ क्षुत्तृट् भयं सुखं दुः

(अ० रामा०)

खं प्राणबुध्ध्योर्निरीक्षते ॥२॥ जेणें जिंकिलें इंद्रियांशी ॥९८॥ तदुक्तं मनुना –

आध्यापनमध्ययनं यजनं याजनं तथा ॥ दानं प्रतिग्रहंचैव ब्राम्हणानामकल्पय

त् ॥८८ (अ०१) तथाच भारते – दमेमेव महाराज धर्ममाहुः पुरातनं ॥ स्वाध्याया

भ्यसनंचैव तत्र कर्म समाप्यते ॥१॥ प्रजानां रक्षणं दानमिज्याध्ययनमेवच ॥ वि

षयेष्वप्रसक्तिश्च क्षात्रियस्य समासतः ८९ ॥ तथाच भारते – दद्याद्राजन्न या

चेत यजेत न च याजयेत् ॥ नाध्यापयेदधीयीत प्रजाश्च परिपालयेत् ॥१॥ नि

त्योद्युक्तो दस्युवधे रणे कुर्यात्पराक्रमं ॥ ६ ॥ मृदुर्हि राजा सततं लंघ्यो भवति सर्व

दा ॥ तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाश्रय ॥१॥ तस्मान्नैव मृदुर्नित्यं तीक्ष्ण

नैव भवेन्नृपः ॥ वासंतार्क इव श्रीमान् न शीतो न च (घ)र्मदः ॥२॥ पशूनां रक्षणं दा

नमिज्याध्ययनमेवच ॥ वणिक्पथं कुसीदंच वैश्यस्य कृषिमेवच ॥९०॥



एक एवतु शुद्रस्य प्रभुः कर्म समादिशत् ॥ एतेषामेव (व)र्णानां शुश्रूषामनुसूय

(भारत)

या ॥९१॥ स्वाहाकारः स्वधाकारौ मंत्रः शुद्रेन विद्यते ॥ ६ ॥ याचप्रमाणें चारी आश्रमां

चे हि धर्म मनुस्मृति व भारत यांत असलेले पहावे – पाहूनि कूलशील सम ॥ ३४ –

सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि ॥ कामतस्तु प्रवृत्तानामीमास्युः क्रमशो

वराः ॥१२॥ (अ०३) लग्नकालो याज्ञवल्क्येनोक्तः – त्रिंशद्वर्षः षोडशाब्दां भार्यां

विंदेत नग्निकां ॥ एकविंशतिवर्षो वा इ० ॥ त्यासंधीत तो हरवला – ३६ – नष्टे मृते प्रव्रज

(पराशरः)

ते क्लीबे च पतिते पतौ ॥ पंचापत्सु च नारीणां पतिरन्यो विधीयते ॥१॥ असो गृह

स्थें निरंतर – ५२ – नित्याग्निहोत्रिणो विप्राः संति ये गृहमेधिनः ॥ तएव सर्व फ

लदाः सुराणां कामधेनवः ॥१॥ भक्ष्यं भोज्यंच पेयंच यद्यदिष्टं सुपर्वणां ॥ अग्नौ

हुतेन हविषा तत्सर्वं लभते दिवि ॥२॥ नान्यदस्ति सुरेशाना मिष्टसिद्धिप्रदं दि

(शिवगीता)

वि ॥ ६ ॥ संध्येचा पाहूं ज्ञातां अर्थ ६५ – पूर्वां संध्यां जपंस्तिष्ठन् नैशमेनो व्यपोहति

(मनुस्मृतिः)

॥ पश्चिमां तु समासीनो मलं हंति दिवाकृतं ॥१०२ (अ० २) तदुक्तं याज्ञवल्क्येन – दि

वा वा यदि वा रात्रौ यदज्ञानकृतं भवेत् ॥ त्रिकाल संध्याकरणात्तत्सर्वं विप्रण

श्यति ॥

+: ख्याति ॥१॥ – स्त्रीन होतं जाता विषय ८६ – नौष्टादि केषु मंत्रेषु नियोगः कीर्तितो (क्क) मिव ॥ नाविवाहविधावुक्तं

विधावा वेदनं पुनः ॥८५॥ (मनुस्मृतिः)

अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः॥ मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति॥६६॥ समहीमखिलां भुंजन् राजर्षिप्रवरः पुरा॥ वर्णानां संकरं चक्रे कामोपहतचेतनः॥६७॥ ततः प्रभृति यो मोहात्प्रमीतपतिकां स्त्रियं॥ नियोजयत्यपत्यार्थं तं विगर्हंति साधवः॥६८॥ (अ॰ ९) (मनुस्मृति) सभ्य स्त्री पुरुषां चीरीति॥ ११५-ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति॥ घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः॥१॥ पुत्रा विषयीं-लालनाद्बहवो दोषाः शासनाद्बहवो गुणाः॥ शिष्य स्त्री तनयादीनामिति यत्तन्मृषा न हि॥१॥ वैरिणी सा च विद्येया माता या लालयेत्सुतं॥ पिता पि च यतः पुत्रो लालितो नरकं व्रजेत्॥२॥ आत्रिवर्षसुतं माता शिक्षयेच्च ततः पिता॥ तथापि सहितो नित्यमागर्भजननाष्टमं॥३॥ अतूर्ध्वं सदाचार्यः शिक्षयेत्तं च कुत्रचित्॥ आषोडशांततः सर्वे निवर्ततेहि यौवने॥४॥ युवानं मित्रवन्नित्यं शिष्यं वाथ सुतं च वा॥ शिक्षयेन्नैव दंडेन नीतिरेषा सनातनी॥५॥ मातुः पितुश्च यः शिक्षां नाचार्यस्य च नांधधीः॥ गृह्णीया यौवने प्राप्ते स क्लेशं याति दारुणं॥ इह राजादिजाभितिर्यमजापरजं॥

॥८५॥ ⁘ मानि॥५॥ (आ॰ प्र॰ ९) यज्ञशिष्टाशिनः संतो मुच्यन्ते सर्वकिल्बिषैः॥ भुंजते ते त्वघं पापा ये पचन्त्यात्मकारणात्॥१॥ (गीता) ॥ अथ मा पश्य भगवंतं विभावसुं॥ शीतं भयं तमोप्येति साधून्संसेवतस्तथा॥२॥ (भागवत) इ॰ अ॰ द्वाविंशतितमः सर्गः॥



श्रीगु॰॥ ॐ को नरको इति॥ असत् संसारी॰ इ॰ नि॰ मू॰ श्रु॰॥ देहादि प्रपंच असत्य॥६५ अन्यथा संतमात्मानमन्यथा प्रतिपद्यते॥ किं तेन न कृतं पापं चोरेणात्मापहारिणा॥१॥ सत्याशी मिथ्यात्व कल्पिलें १२- असद्ब्रह्मेति चेद्वेद स्वयमेव भवेदसत्॥ अस्ति ब्रह्मेति चेद्वेद संतमेनं ततो विदुः॥१॥ ब्रह्मणो नास्ति ताज्ञानाग्नि त्वं संज्ञा तपातकः॥ बहिर्विषय लाभार्थं व्रजन्देहाद्दहर्निशं॥२॥ दुःखाद्दुःखतरं प्राप्य मरणं सोऽधिगच्छति॥ मृतश्च जायते दुःखी दुःखी च म्रियते पुनः॥३॥ (आत्मपु॰) सत्यं ब्रूयात्प्रि॰ इ॰ मनुः॥१॥ अधमजनजे असती॥४८॥ संगं न कुर्यादसतां शिश्नोदरतृपां क्वचित्॥ तस्यानुगस्तमस्यंधे पतत्यंधानुगोऽन्धवत्॥१॥ (भागवत) निःशेषहरायाकल्पना॥५९॥ अज्ञानमेवास्य हि मूलकारणं तद्धानमेवात्र विधौ विधीयते॥ विद्यैव तन्नाशविधौ पटीयसी न कर्म तज्जं सविरोधमीरितं॥१॥ नाज्ञानहानिर्न च रागसंक्षयो भवेत्ततः कर्म सदोषमुद्भवेत्॥ पुनः पुनः संसृतिरप्यवारिता तस्माद्बुधो ज्ञानविचारवान् भवेत्॥२॥ (रामगीता) हा विचार आणो निमनी॥७२॥ आदौ स्वर्णाश्र॰॥१॥ यावन्न पश्येदखिलं मदात्मकं तावन्मदाराधनतत्परो भवेत्॥ श्रद्धालुरत्यूर्जितभक्तिलक्षणो यस्तस्य दृश्योऽहमहर्निशं हृदि॥२॥ (रामगीता)

॥ छ्यासष्टावे वर्षे ॥३॥ (आ०मपु०)

द्यूत मृगया स्त्रीसेवन ८७- मृगयाऽक्षा दिवास्वप्नः परिवादः स्त्रियो मदः ॥ तौर्यत्रि

कं वृथापानं कामजो दशकोगणः ॥१॥ पैशून्यं साहसं द्रोह ईर्षाऽसूयार्थदूषणं ॥

वाग्दंडजं च पारुष्यं क्रोधजोपि गणोऽष्टकः ॥२॥ पानमक्षाः स्त्रियश्चैव मृगया

च यथाक्रमं ॥ एतत्कष्टतमं विद्याच्चतुष्कं कामजे गुणे ॥३॥ दंडस्य पातनं चै

(भारत)

व वाक्पारुष्यार्थदूषणं ॥ क्रोधजेपि गणे विद्यात्कष्टमेत[illegible]त्रिकं सदा ॥४॥

शूद्र क्षत्रिय आणि वैश्य ८९॥ क्षत्रियो वापि वैश्यो वा संन्यासी ऋषभादिव [illegible]

वीरमार्गेण देहं स्वं त्यजेदेवाविचारयन् ॥१॥ स्त्रीशूद्रादिरपि प्रायः कुर्यात्त्यागं त

था सदा ॥२॥ अभी[illegible]ः सर्वतो गच्छेच्च युद्धा[illegible]ग्निजलदंष्ट्रितः ॥ आनिपातं श

रीरस्य वीरमार्गो यमीरितः ॥३॥ मुखजानामयं धर्मो यद्विष्णोर्लिंगधारणं ॥ बा

हुजातोरुजातानां नायं धर्मो विधीयते ॥३॥ आतां दासीवेश्यागमन ९२- अक

(आ०मपु०)

र्तव्यं न कर्तव्यं प्राणैः कंठगतैरपि ॥ कर्तव्यमेव कर्तव्यं प्राणैः कंठगतैरपि ॥१॥ अ

त

सुर्या नाम ते लोका अंधेन तमसावृताः ॥ मृत्वा तानभिगच्छंति ये के चात्महनो जनाः

॥२॥ ततः पापं न कर्तव्यं कारणीयं च कर्हिचित् ॥ प्रयोजकः प्रयोज्यश्च तादृि[illegible]



राज्ञावपि व्यपर्वादिशासि वर्जयेत्सर्वदा ॥८५ अतो नैव गंतव्यं भवतान्यथापुरकर्हिचित् ॥

परदारान्न गच्छेद्धि कर्मणा मनसा गिरा ॥ तां गच्छन् भयमागच्छेदिह लोके

त्र

परत्र च ॥४॥ ततस्त्वं कामुकश्चेत्स्याद्दारान्संपादयात्मनः ॥ गृहस्थो भव त

त्रापि यज्ञदानादिकं कुरु ॥५॥ दिवा न मैथुनं याहि स्वदारेष्वपि कर्हिचित् ॥

प्रत्नास्यतुं वधूनां च लोभयं[illegible]तीव कामुकं ॥७॥ ऋतावेवाव गंतव्यं [illegible]

स्नातायां सुदिने तथा ॥ कृत्वा शास्त्रीय संस्कारान्निषिद्धासु रात्रिषु ॥८॥

एवं ते पुत्रलाभः स्यात्पुत्रश्चैतादृशो यतः ॥ इत्यभिप्रायतः पुत्रप्रशंसां कुरु

ते हि सा ॥९॥ उत्पादनं न पुत्राणां विधत्ते कर्हिचित्क्वचित् ॥ अप्राप्तस्य विधानं

स्यात्प्राप्तं नैव विधीयते ॥१०॥ योषितां संगमात्पुत्रजन्म प्राप्तं सदैव हि ॥ विनाशा

स्त्रेण कामाच्च नारीसंगस्तथा स्वयं ॥११॥ पश्वादीनां विनाशास्त्रं मले च्छादेश्चै

व दृश्यते ॥ प्रजोत्पत्तिश्च नारीणां संगोप्य विदुषां तथा ॥१२॥ अत एव पशून्स्मा

हदृष्टांते रागवेदिनः ॥१३॥ पुत्रोत्पत्तौ च संयोगं पुनर्वारयितुं स्थिता ॥ अजाय

जायते जाये त्वेवमाह श्रुतिः स्वयं ॥१४॥ उत्पादयंति पशवः प्रायो गच्छंति यो

षितः ॥ भवंतश्च तथा चेत्स्युर्विशेषो भवतां हि कः ॥१५॥ (आ०मपु०)

स्थावरानैव जानंति मदुक्तं श्रोत्रवर्जिताः॥ बुद्धिहीनास्तथैवैते श्रोत्रयुक्ताश्र

जंगमाः॥१५॥ केचिन्मां नैव सर्पंति लोके येनाधिकारिणः॥ भवंतो गुणसंयु

क्ताः सर्व एवाधिकारिणः॥१६॥ त्रैवर्णिकाविशेषेण ब्राम्हणाये बहुश्रुताः॥ का

मं त्यजथ चित्तोत्थं यदि यूयं सुखार्थिनः॥१७॥ इ० आत्मपुराणोक्त श्रुति

ब्राम्हणसंवादः॥ अहो जिंकूनि जे आणिली॥ भ॥ गृहीता त्वं वरारोहे भीष्मे

ण पश्यतो मम॥ रथेन स्थापिता तेन न गृहीष्ये करं तव॥१॥ परोच्छिष्टां च कः

कन्यां गृण्हाति मतिमान्नरः॥ अतोऽहं न गृहीष्यामित्युक्त्वा भी[illegible]ष्मेण मा

(भारत)

न्यवत्॥२॥ इति शाल्वोक्तिः॥ अथ भीष्मं प्रति अंबोक्तिः॥ शाल्वो मुक्ताल

यावीर न गृण्हाति करेण मां॥ त्वं गृहाण महाभाग मरिष्याम्यन्यथा ह्यहं॥१

अंबां प्रति भीष्मोक्तिः॥ अन्यचित्तां कथं त्वां वै गृण्हामि वरवर्णिनी॥ पितरं

रो

स्वं वराहेब्रजशीघ्रं निराकुला॥१॥ (देवी० ३ स्कं० अ० २०) स्वयें द्विजवर्णी अ

सोनी-१४६॥ श्रेयःस्वधर्मो विगुणः परधर्मात्स्वनुष्टितात्॥ स्वधर्मे निधनं

श्रेयः परधर्मो भयावहः॥१॥ इ० गीतासु॥ इ० अ० त्रयोविंशतितमः सर्गः



श्रीगु०॥ ॐ किं परमपदमिति॥ प्राणेंद्रियांतः० इ० नि० मू० श्रु०॥ आतां एकाओवीपा

रां

सून पस्तीसओव्यापर्यंत श्रोते व वक्ता यांच्यासंवाद आहे त्यातील सारांशासहित चरित्र॥

रत्नागिरी कडील वरवडे गांवचे मूळ राहणार गोडबोले उपनामक भास्करपंत अण्णा नाम

क गृहस्थ आंग्रेयांच्या पदरीं सरकारकुनीच्या हुद्यावर होते स्थायीक घर त्यानीं पेणयेथ केलं हो

ते - यांच्या स्त्रीचें नाव अन्नपूर्णाबाई असे - यांस एक कन्या व पुत्र दोन त्यांतील कनिष्ट पुत्र तेच हे रघु

नाथपंत होते - यांचें जन्म कांहीं यात्राप्रसंगानें कृष्णातीरीं वांईयेथे शालीवाहन शक १७४२ विक्रम

नाम संवत्सरीं आश्विन कृष्ण तृतीयेस झालें जन्मकाळीं कर्कलग्न होतें - पुढें यांच्या ज्येष्ठबंधूस द

आठव्या वर्षी

वाजा झाल्यावर यांचा व्रतबंध झाला, तिन्ही संध्या रुद्र आणि उपनिषदें यांचें अध्ययन झाल्यावर

अण्णानीं यांस पुणें येथे विद्याभ्यासास ठेविलें - वर्षभर अभ्यास होत आहे तों अण्णास वैशाखमासीं

१७५३ मध्यें देवआज्ञा झाली त्याकरितां पेणेस परत जाणें झालें पुढें दोन वर्षे हे तेथेच होते परंतु मा

तुश्रींचें व यांचें तेथे बनेना॥ कारण यांचा अभ्यास तेथे होईना शेनटी पंत पुण्यास आले व मधुकरी

मागून अभ्यास करूं लागले - त्यांत त्यांनीं इंग्रजी लीपीचा व भाषेचाहि अभ्यास केला त्यामुळें त्यांस श

के[illegible] मध्यें चाकरी लागली - तेथून पुढें फलटणीत रायटर झाले त्याच साली म्हणजे १७६४

१७८०

❋ मध्यें यांचा विवाह झाला यांच्या स्त्रीचें नांव सीताबाई - कित्येक राधिकाबाई म्हणतात ही पुणें येथील भिडे यांची कन्या. १७६५ मध्यें यांस सडकांच्या कारखान्याकडील एका इंग्रेज अधिकाऱ्यानें आपल्या शिरस्तेदारीची जागा दिली परंतु यांस कानास दडे बसण्याचा जबर अजार उत्पन्न झाल्यामुळें यानीं त्या जागेचा राजीनामा दिला - नंतर अजार बरा झाला परंतु ऐकायास कमी येऊं लागलें

मनसावेदरूपेण ब्रम्हात्मानैव गम्यते॥ तथा तेन न गम्योयमवाङ्मनसगोचर

२॥ अस्मिन्नर्थ इमं श्लोकं वदंति ब्रम्हवादिनः॥ यतो वाचो निवर्त्तंते अप्राप्य मनसा

सह॥ आनंदं ब्रम्हणो विद्वान्न बिभेति कदाचन॥४॥ मनसा सहिता वाचो यजुरा

याः प्रकीर्तिता॥ निवर्त्तंतेऽन्नताः सर्वा आनंदात्मप्रवेदनात्॥५॥ मनोमयोय

थैवास्ते सतु प्राणमये स्वयं॥ विज्ञानमयरूपस्य तस्यात्राखिलमीरितं॥७॥ शिरः श्र

द्धा तथा पक्षो दक्षिणः शास्त्रजैव धीः॥ मानसी विहिते कर्म ज्ञाने मनसि संस्थिते॥२॥

क्रियमाणे च तस्मिन्नस्यात्सत्यशब्दोदितैव धीः॥ सोत्तरोपि भवेत् पक्षो योगः

शास्त्रार्थनिश्चयः॥३॥ उदरं सतु स विज्ञेयो विज्ञानमयरूपिणः॥ महः प्रथमज

स्यैषा बुद्धिर्विज्ञानकारणं॥ अस्य पुच्छं प्रतिष्ठा या यदियं सर्वकारणं॥४॥ विज्ञा

नमयतस्तस्मादानंदमयशब्दितः॥ आंतरो ह्यन्य एवायमात्माऽव्याकृतरूपधृक॥१॥

अस्यानंदमयस्यस्यात् शिर इष्टार्थदर्शनं॥ प्रियं लाभं स तथेष्टस्य मोदः पक्षोपि द

क्षिणः॥ भोगस्तस्य प्रमोदः स्यादुत्तरः पक्ष एव सः॥२॥ सुखं सामान्यमेतेषु ह्यानं

दोयः प्रियादिषु॥ आमोदरं स विज्ञेयः पक्षिणोस्य महात्मनः॥३॥ आनंदा

तः [illegible] सर्वेषां कारणं॥ पश्चात्पाचनसंप्राप्तः कोशः पंचकमीरितं॥४॥ अस्य पुच्छं प्रतिष्ठा च न होते पंच कोशाः प्रकीर्तिताः॥ ८॥ (आ॰ ४३०)

